ब्रह्मद्वयानन्द[1]रसातिरेक–सहोदरास्यन्द[2]सुखानुभूतेः ।
परात्मतुष्टिः परमास्ति काचित् सा चेत्स्वयं नो मनु[६B]षे[3] मनीषिन्
॥ १२ ॥

राजैदात्रोपदेश्यो* रघुपतिकुणपाधीशवृत्तोक्त्य[4]नुक्ता–
चारप्राप्ति[4]प्रकर्षेतरफलविभवादत्र* हेयाप्ततत्त्वः[5] ।
[6]अर्थो धर्मोऽनुषङ्गादतनुरपि* गतो रङ्गकोत्तीर्णनर्त्त–[6]
[7]क्यन्वेषात्तत् प्रवृत्त्यै* न हि घटति[8] कथं शास्त्रमेतन्निवृत्त्यै ॥ १३ ॥

[9]आह च भगवान् याज्ञवल्क्यः—

हंहो विप्रा गुह्यमेतच्छृणुध्वं
तत्त्वं द्रष्टुं वोऽस्ति यद्यत्र वाञ्छा ।
*नानारूपैर्भाविता भावलेशै
रङ्गोत्तीर्णां नर्त्तकीं कामयध्वम् ॥ १४ ॥ इति[9]

तस्मादेतदुपासनास्य[10] नियता तच्छासनाशंसनाद्[11]
ब्रह्माद्याप्तपरिग्रहाच्च ननु[12] भो नामूलमाकाङ्क्षति ।[13]
वेदत्वादिह निर्मितेर्निगमता* धातुः प्रमाणीकृता
तत्सारेण तु सार्ववर्णिकममुं* निर्मित्सतः* संभ्रमम्[14] ॥ १५ ॥

किञ्चोपवेद[15] एवायं साम्नः सामैव वा पुनः ।
सामाख्या गीतिषु प्रोक्तेऽन्यतो[16]ऽस्माच्च प्रमाणता ॥ १६ ॥
[17]वेदेनाप्यात्ममूलत्वादिह मोहाद्यपेक्षितम् ।[17]
[18]स्वरजातमुदात्तादि यदायत्तं[18] यतः स्मृतम् ॥ १७ ॥

---

प्रतिस्थित पाठ— १३. *देशो ।* दग्र । *धर्मोनुसङ्गादतनुरपि । ० *क्यन्वेषत्तत् प्रवर्त्यै ।
१४. * ० र्नाना । १५. *निर्मिते निगमना । *सार्वकर्णिकममुं ।
*निर्मित्सता ।

---

1. P. ब्रह्माद्वयानन्द । 2. P. सहोदरास्वाद । 3. B. मानुषे । 4-4. P ० नुक्त्याचार-प्राप्त० । 5. P. ०देयहेयाप्ततत्त्वः । 6-6. P. अर्थो धर्मानुषङ्गात(त्त)वनुरपि(भि)मतो रङ्गकोत्तीर्णनर्त्त० । 7-7. B. ० क्यन्वेषाततप्रवृत्यै । 8. P. भवति । 9-9. यह अंश B.O. के अतिरिक्त अन्य किसी प्रति में नहीं है । 10. P. तस्मादेव तु शास्त्रतास्य । 11. A. तछासनाशंसना । 12. P. न तु । 13. P. नो मूलमाकांक्षति । 14. P. पञ्चमम् । 15. P. किं रूपवेद; K. वेदरूप । 16. P. प्रोक्तेत्यतो । 17-17. P. वेदेनाप्यात्ममूल-त्वादिदमेव ह्यपेक्षितम् । 18-18. P. स्वरजातमुदात्ताद्यस्वि(स्मि)न्नायत्तं ।

तथा हि नादधर्मोऽयमुदा[त्तादि: स्मृत: स च ।]
नाद:[७A]प्राणान्न[1]संयोगाज्जात: श्रुत्यादि[2]भेदभाक्[3] ॥ १८ ॥

श्रुतिभ्य:[4] स्यु: स्वरा: षड्जर्षभगान्धारमध्यमा: ।
पञ्चमो धैवतश्चाथ निषाद इति तेषु च ॥ १९ ॥

उदात्ता: समपा: प्रोक्ता: स्वरितौ च रिधौ स्वरौ ।
अनुदात्तौ तत[5]स्तस्माज्जगतोऽप्यस्य हेतुता[6] ॥ २० ॥

अङ्गत्वेनाथवाऽस्यास्तु[7] प्रामाण्यं तत्त्वमृत्विजाम्* ।
चार्यापक्रान्तया[8] होमविधानात् षट्केन*[9] च ॥ २१ ॥

मानान्तरमधिगतेर्गायतीति[10] विधि: स्फुट: ।
औद्गात्रस्य विधानाच्च त्रैकाल्ये नाट्यदर्शनात् ॥ २२ ॥

अश्वमेधक्रतौ गानविधानमपि दृश्यते ।
ब्राह्मणस्य दिवारात्रौ राजन्यस्य च शासनात् ॥ २३ ॥[11]

नरेशस्यानुगामित्वं[12] यन्निषेधस्य तत्र हि ।
नृदेवो न निषिध्येत[13] नृमात्रस्य निषेधनात् ॥ २४ ॥

शाम्येद्यथाहिदष्टस्य विषेण विषमुल्वणम् ।
तथाऽस्मिन् विषया[14]ऽकाङ्क्षा विषयासक्तचेतसाम् [15] ॥ २५ ॥

जीमूतवाहनदधीचिमुखाधिपानां
नाट्ये विलोक्य चरितं स्वभिनीयमानम् ।
प्राणैर[पि प्रयतते न] हितं परस्य[16]
कर्तुं मन: खलु नरस्य लघीयसोऽपि [७B]* ॥ २६ ॥

---

प्रतिस्थित पाठ— २१. *मृत्विजां । *षटकेन । २६. *"स्य लघीयसोपि ॥७३॥', यह अंश पृ. ८ A में भी दोहराया गया है।

---

1 P. प्राणाग्नि । 2. A. श्रृत्यावि । 3. B. भेदभाए् । 4. B. श्रृतिभ्य: । 5. P. गनी । 6. B. हेतुतां । 7. P. स्यात् (तत्); A. का पाठ प्रति के समान । 8. P. चार्याप्य(I)क्रांतया । 9. P. खटकेन; K. कठकेन । 10. P. ०गतेगा(र्गा)यतीति । 11. B. में 22-23 पद्य एक में ही दिए गए हैं । 12. P. नाराशंस्यनुगामित्वं । 13. P. निषेध्येत । 14. B. तथास्मिन्निविषया । 15. P. चेतस: । 15. K. प्रयतते(ऽभि)हितं परस्ब ।

न नृत्येदिति यन्नृत्यनिषेधः कामवर्त्तिनः[1] ।
तद्ब्रह्मचारिविषये वचनं पर्यवस्यति ।। २७ ।।

द्विजातिविषयो गाननिषेधो यस्तु[2] कुत्रचित् ।
तद्विदां स्यादपात्रत्वं[3] तत्त[4]द्विद्योपजीविनाम् ।। २८ ।।

अस्येतिहासवदयं समयः प्रदिष्टो-
ऽनध्यायरूप ऋषिणा निगमानुरोधात्* ।
[5]आसारितादिवरगीतकसंप्रयोगात्[5]
धर्माद्यवाप्तिरुदितेह परा मुनीन्द्रैः ।। २९ ।।

प्रचुराणि[6] प्रमाणानि यथायथमिहार्थतः ।
अष्टावपि विलोक्यानि पुराण इव सूरिभिः ।। ३० ।।

अप्रस्तुतत्त्वात्तल्लक्ष्म न वयं व्याहरामहे ।
प्राकट्यमुपयास्यन्ति प्रयोगादेव तानि यत् ।। ३१ ।।

[7]इति श्रीराजाधिराजमहीमहेन्द्रश्रीकुम्भकर्णविरचिते पाठ्यरत्नकोशेऽनुक्रमणिकोल्लासे आरम्भसमर्थनं नाम द्वितीयं परीक्षणम् ।।[7]

---

प्रतिस्थित पाठ—२९. *निगमोनुरोधात् ।

1. P. कामवर्गतः । 2. P. यत्र । 3. P. यदपात्रत्वं । 4. B. में 'तत्' नहीं है । 5-5. P. आसाविता० । 6. P. प्रत्यक्षादि । 7-7. P. इति श्रीराजाधिराजमहेन्द्र-श्रीकालसेनविरचिते सङ्गीतराजे षोडशसाहस्र्यां सङ्गीतमीमांसायां पाठ्यरत्नकोशे अनुक्रमणिकोल्लास प्रारम्भसमर्थनं द्वितीयं परीक्षणम् ।

# सङ्गीतस्तुति नाम तृतीय परीक्षण

सिद्धप्रमाणभावस्य सङ्गीतस्य निरूप्यते ।
स्वरूपस्य विचारोऽथ कुम्भकर्णेन[1] भूभुजा ॥ १ ॥*

ऐक्यं* जीवपरात्मनोर्दिशति यद्* बालेश्वरो* सङ्गतं[2]
तुल्यं लम्भयदद्भुतं[3] विगलिता*शेषेन्द्रियार्थग्रहो ।
मा[८A]यान्तःपतितं मदादविरमं[4] सम्मोहयेन्मायिनं
[5]लोकातीतचमत्कृतिश्रुतिगतं[5] गीतं परं तत् स्तुमः ॥ २ ॥

जीवातुर्गदिनां [6]प्रियं विरहिणां[6] ध्येयं परं योगिनां
दीनानामतिदुःखिनामपि नृणां विश्रान्तिभूमिः परा ।
निःस्वानां [7]परमो निधिर्नवनवो नार्मोत्करो भोगिनां[7]*
गीतं किञ्चिदमेयरूपमहिमप्राग्भारमुज्जृम्भते ॥ ३ ॥

गीतमेव वशीकारकार्मणं वशिनां नृणाम्[8] ।
त्यक्तान्यत्कार्यसम्भारा[9] मुनयो यदुपासते ॥ ४ ॥

स्वर्गतं पुनरानेतुं शक्तिर्यस्य जगत्त्रये ।
अगोचरः* कविगिरां* तद्गीतं केन वर्ण्यते ॥ ५ ॥

[10]इति श्रीराजाधिराजमहीमहेन्द्रविरचिते सङ्गीतराजे पाठ्यरत्नकोशेऽनुक्रमणिकोल्लासे सङ्गीतस्तुतिर्नाम तृतीयं परीक्षणम् ।[10]

---

प्रतिस्थित गाठ— १. *प्रति में संख्या ७६ से चलती है । २. *एको । *यो । *बालेथरो । *विगलितः । ३. * ०भंवनयोर्नामोत्करो । *भागिनां । ५. *आगोचरः । *कति गिरां ।

---

1. P. कालसेनेन ० । 2. P. संमवं । 3. P. लम्भय(व)द्भु्तं; A. B. लंभययव्भुतं । A. B. शेषेन्द्रया । 4. P. म(य)दत्यविरतं । 5-5. P. लोकातीतचमत्कृतं श्रुतिगतं । A. में 'चमत्कृ' के पश्चात् एक अक्षर का स्थान रिक्त फिर 'तिश्रुतिगतं' है । 6-6. P. प्रिया-विरहिणां । 7-7. P. परशेवधिर्नवनवो भोगोत्करो भोगिनां । 8. P. वशिनामपि । 9. P. त्यक्तान्यकार्यसम्भारा । 10-10. P. में 'महीमहेन्द्र' के बाद 'कालसेन', शेष यथावत् ।

# अनुक्रमणिका नाम चतुर्थ परीक्षण

यस्तु निर्यवनं[1] कर्त्तुमवतीर्णोऽस्ति[2] भूतलम्[3] ।
तेन श्रीकुम्भकर्णेन[4] क्रियते गीतनिर्णयः ।। १ ।।*

सम्यग्गीतं तु सङ्गीतं गीतादित्रितयं नु[5] वा ।
समष्टिव्यष्टिभावेन शब्देनानेन गीयते ।। २ ।।

[6]त्रिविक्रम*क्रमासक्तचेतसा कुम्भभूभुजा[6] [8B]
उपक्रमक्रमं[7] तस्य विधातुं संविधीयते ।। ३ ।।

[8]प्राज्यं राज्यतनु[:][8] परेति परमाहृग्वेदतः सामतो
गीतं गीतमनोहरात् कमलभूरादाय वै सृष्टवान् ।
नेपथ्याभिनयौ [9]यजुर्भिरुदितो[9]ऽथाथर्वणस्तान्[10] रसान्
गम्भीर[11]स्थितपाठ्यगीतविवरे वाद्यं पुनस्तद्द्वयात् ।। ४ ।।

पाठ्यं वाक्यात्मकं वाक्यं सर्वाभिनयमूर्द्धनि ।
भरतेनाभिषिक्तं तद्वाचि *य[12][त्नं विधि]त्सताम्[13] ।। ५ ।।

[14]प्रबोधकाद्भुतं कालं[14] विशेषादस्य हेतुतः[15] ।
आदावतो नरेन्द्रेण सर्वस्यैव[16] विविच्यते ।। ६ ।।

सङ्गीतराजे तत्र स्यू* रत्नकोशाः* क्रमादमी[17] ।
[18]पाठ्यगीतवाद्यनृत्यसरसा*स्तत्त्वतः[18] क्रमात् ।। ७ ।।

प्रतिरत्नकोशमुक्ता उल्लासा वेद*सम्मिताः[19] ।
परीक्षणानि चत्वारि प्रत्येकं* तेषु च क्रमात् ।। ८ ।।

---

प्रतिस्थित पाठ—१. *केवल इसी पद्य पर सं. १ दी गई है आगे ८४ से चालू है। ३* त्रित्रिक्रम।
५. *तद्वादि। ७. *स्यु। *रत्नकोश। *वाद्यादिपरसास्तत्त्वतः।
८. *उल्लासावेव। *प्रयोगां।

---

1. P. निर्वचनं। 2. P. ० तीर्णोस्तु(स्ति)। 3. P. भूतले। 4. P. श्रीकालसेनेन। 5. P. तु। 6-6. P. त्रिविक्रमक्रमासक्तचेतसा तामराजिना। 7. P. उपक्रमः क्रमं। 8-8. P. पाठ्यं नाट्यतनुः। 9. P. यर्जुनिगमतो। 10. P. ०थर्वतस्तान्। 11. P. संगीत। 12. A. B. यत्नं। 13. P. विधित्सता। 14-14. P. प्रबोधस्य प्रबन्धानां। 15. P. हेतुता। 16. P. सर्वस्यैतद्। 17. P. रत्नकोशाः क्रमादमी। 18-18. P. पाठ्यगीतवाद्यनृत्यरसाह्वास्तत्र च। 19. B. वेदसम्मताः।

अनुक्रमणिका वाद्य[1]स्वरूपं पदवाक्ययोः ।
छन्दांसि भूषणानीह पाठ्योल्लासाः स्फुटा[2] अमी ॥ ९ ॥
स्वरोत्पत्तिस्तथा रागाः प्रकीर्णकमथापि[3] च ।
प्रबन्धाख्यश्च ते गीतरत्नकोशे द्वितीयके ॥ १० ॥
ततं च शुषिरं*[4] चाथ घनं चैवावनद्धकम् ।
उल्लासाः क्रमशो[5] वाद्य [९A] रत्नकोशे प्रकीर्त्तिताः ॥ ११ ॥
अङ्गसंज्ञस्तथा* चारीसंज्ञकः करणाभिधः ।
प्रकीर्णकाभिधो नृत्यरत्नकोशे कथानकाः[6] ॥ १२ ॥
[7]रसलक्षणभावादिरनुभाषाभिधं तथा ।[7]
ततः संचारिभावस्य[8] रत्नकोशे रसाभिधे ॥ १३ ॥
अनुक्रमणिकोल्लासे कर्त्तुः*[9] शंसनमादितः ।
आरम्भसार्थता [10]तेषामीश्वरस्य स्तुतिस्ततः[10] ॥ १४ ॥
अनुक्रमणिका चेति चतुर्थं परिकीर्त्तितम् ।
पदलक्षणमेतस्मिन् लास्यलक्षणमेव[11] च ॥ १५ ॥
संज्ञा च परिभाषा चेत्युल्लास[12]पदनामनि ।
अनुष्टुप्शासनं [वृत्तार्ययोः[13] शासनमेव च] ।
प्रस्तारपरिपाटी च छन्द उल्लास ईरिताः ॥ १६ ॥
उद्देशो लक्षणानीह [14]ततोऽलङ्कृतिरेव च[14] ।
गुणदोषाश्च तत्त्वेनोल्लासेऽलङ्कारसंज्ञके ॥ १७ ॥
[15]स्थानं श्रुतिपदग्राममूर्च्छनातानरासकाः ।[15]
साधारणं तथा वर्णाः सालङ्काराश्च जातयः ॥ १८ ॥

---

प्रतिस्थित पाठ— ११ *शुखिरं । १२ *अंगसंतस्तथा । १४ *कर्त्तु । १६ *'शासनं' के बाद स्थान रिक्त, फिर 'र्थयोः'; पुनः स्थान रिक्त के बाद 'रो' तथा फिर स्थान रिक्त है। पद स्पष्ट नहीं होता, अतः P का पाठ दिया है।

---

1. P. चाथ । 2. P. स्मृता । 3. B. प्रकीर्णमथापि । 4. P. सुखि(षि)रं । 5. P. क्रमतो । 6. P. क्रमान्मताः । 7-7 P. रसलक्ष्मविभावादिरनुभावाभिधस्तथा । 8. P. ०संज्ञश्च । 9. P. कर्त्तृ । 10-10. P. चेति संगीतस्य स्तुतिस्ततः । वाक्य-11. P. लक्षणमेव । 12. P. चेत्युल्लासे । 13. B. वृत्तायययोः । 14-14. P. ततोऽलंकृतयः पुनः । 15-15. P. स्थानश्रुतिस्वरग्राममूर्च्छनातानसंज्ञकाः ।

[1]दृश: स्वरूपभेदाश्च[1] चतुर्भिश्च परीक्षणै: ।
ग्रामरागादिरागाङ्गोपाङ्ग[2]भाषाङ्गनिर्णय: ॥ १९ ॥
क्रियाङ्गानि[3] च[4] वर्ण्यन्ते रागोल्लासे क्रमादिति ।
वाग्गेयकारकथनं शब्दभेदाश्च तत्त्वत:[९B] ॥ २० ॥
गमकाश्च तथा स्थाया वर्णनीया: प्रकीर्णके ।
गीतकानि तथा सूडत्रयमालिक्रमस्थिता: ॥ २१ ॥
प्रकीर्णका:[5] प्रबन्धाश्च प्रबन्धोल्लास*गोचरा: ।
ततोल्लास* [6]एव तन्त्रीपञ्चकं[6] नकुलादित: ॥ २२ ॥
मत्तकोकिलका चात्र[7] किन्नरी परिकीर्त्यते ।
सौषिरे[8]वेणुनिर्माणं स्वरोत्पत्तिस्तदाश्रिता[9] ॥ २३ ॥
गुणदोषाश्च[10] गाथादि[11] साङ्गोपाङ्ग[12] निरूप्यते ॥ २४ ॥*
मार्गतालास्तथा देशीतालास्तत्प्रत्यया अपि ।
ताललक्षणमेतस्मिन् घनोल्लासे समाप्यते ॥ २५ ॥[13]
[14]अङ्गप्रत्यङ्गभणितिरुपाङ्गानां क्रियाभिधा[14] ।
आहार्याभिनयश्चैवमङ्गोल्लासे प्रकाश्यते ॥ २६ ॥
स्थानकानि तथा चार्य: शुद्धदेशीविभेदत: ।
मण्डलानि तदुत्थानि चारिकोल्लासके क्रमात् ॥ २७ ॥
करणानि द्विधा[15] [16]शुद्धदेशीदेशविभेदत:[16] ।
अङ्गहारा रेचकाश्च करणोल्लास ईरिता: ॥ २८ ॥

---

प्रतिस्थित पाठ— २२. *प्रबन्धोल्लस; *ततोल्लस । २४. *अर्द्धाली पर ही पद्य संख्या है ।

---

1-1. P. दश स्वरगते भेदाश्च । 2. P. ०पाङ्गे । 3. P. क्रियागा(ङ्गा)नि । 4. B. इच । 5. B. प्रकीर्णकाश्च । 6-6. P. एकतन्त्रीपञ्चकं । 7. P. चाथ । 8. P. सौखि(षि)रे; B. सौखरे । 9. B. ०श्रिता: । 10. P. गुण(णा)दोषाश्च । 11. P. पात्रादि । 12. A. B. सांगोपांग । 13. प्रति के पद्य २५ और २६ के बीच में P. में निम्न पद्य और है—

"अवनद्धसमुल्लासे वाद्यं पुष्करसंज्ञकम् ।
पाटा वाद्यप्रबन्धाश्च पटहादिर्निगद्यते ॥ २६ ॥

14-14. P. 'अङ्गप्रत्यङ्गभणितिरूपाङ्गानां क्रिया तथा । B ०रूपकानां० । 15. P. तथा । 16-16. P. शुद्धदेशीभेदविभेदत: ।

वृत्तयश्च तथा न्याया लास्याङ्गानि च तत्त्वतः ।
पात्रलक्षणमेतस्मिन्[1] प्रकीर्णोल्लास उच्यते ॥ २९ ॥[2]

रसस्वरूपकथनं[3] रसविद्रूपवर्णनम्*[4] ।
रसाश्रयाभिधं चा[१०A]न्यद्रसलक्षणसंज्ञकम् ॥ ३० ॥

परीक्षणानि चत्वारि रसोल्लासेऽनुरस्यते[5] ।
नायकानां प्रकथनं नायिकालक्षणं तथा ॥ ३१ ॥*

चेष्टादीनां विभावानां विभावनमतः परम् ।
उद्दीपनविभावाख्यं विभावोल्लासके क्रमात् ॥ ३२ ॥

अनुभावास्त्ववस्थायाः स्वरूपं सात्विकाः पुनः ।
प्रवासाद्यनुभावाश्चानुभावोल्लासगोचराः ॥ ३३ ॥

निर्वेदादिप्रतिरसं भावावस्थानसूचकम् ।
रससंकरनामाद्यं*[6] ग्रन्थस्य च समापनम् ।
परीक्षणानि सञ्चारिसंज्ञकोल्लासके* क्रमात् ॥ ३४ ॥

येनानुक्रमतः शकान् विशकलीकर्त्तुं रणप्राङ्गणे
[7]तत्तद्गूर्ज्जरमालवीयमरुपा[7] नीताः सदुर्गा वशे[8] ।
[9]दुर्गेणाजयमेरुणा[9] निजसमुन्नत्या स्वया[10] सम्पदा
सोऽयं[11] तेन चिरादनुक्रमणिकोल्लासः समुल्लासितः ॥ ३५ ॥*

[12]सरस्वतीरससमुद्भूतकैरवोद्याननायकेनाभिनवभरताचार्येण मालवाम्भोधि-

प्रतिस्थित पाठ— ३० *रसत्वरेपवर्णनं । ३१. *प्रति में ३१ वें अर्थात् ११४ वें पद्य के आगे पद्यांक नहीं हैं । ३४ *रसकंकर० । *संशकोल्लासके । ३५ वें के स्थान पर ११६ अंक है ।

1. P ०मित्यस्मिन् । 2. P. में इस पद्य के बाद यह श्लोकार्धं और है—

'सभापतिः सभायाश्च निवेशो रसकीर्तनम्'

3. A. रसत्वस्य च वर्णनम्; B. में कुछ वर्णों का स्थान ताराङ्कित करके छोड़ दिया गया है । P. का पाठ K समर्थित है और प्रति के पाठ से मिलता है । 4. P. रसज्ञस्य च वर्णनम् । 5. P. तु रस्यते । 6. B. रसशंकरनामाद्यं । 7. P. त्तत्तद्गुर्जरदाक्षिणात्यनरपा; B. ०नगरी । 8. P. वशं । 9-9. P. दुर्गेशा महिषाद्रिणा; B. दुर्गेशा । 10. K. स्वयं । 11. P. साकं । 12-12 P. इति श्रीजगदीश्वरवनदेवनिजगणेन जगदम्बिकाकामाक्षी[1]–

१. B. कामाक्षा ।

माथसंस्थमहीधरेण मेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन आरूपत्रयवनदवदहनदवानलेन प्रत्यर्थिपृथिवी[१०B]पतितिमिरततिनिराकरणप्रौढप्रतापमार्त्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेश्वरेण गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पनाकल्पद्रुमेण वसुन्धरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिंकरेण भवानीपतिप्रसादाप्तापसादवरप्रसादेन राजगुर्वादिविरुदावली*-विराजमानेन राजाधिराजश्रीकुम्भकर्णविरचिते श्रीसङ्गीतराजे पाठ्यरत्नकोशेऽनुक्रमणिकोल्लासेऽनुक्रमणिको नाम चतुर्थं परीक्षणम् । ।।।छ।।। उल्लासश्च प्रथमः समाप्ति समगादिति विततमतीनामभिमतसिद्धिरस्तु ।।।छ।।।[12]

---

प्रतिस्थित पाठ— *विरुदावली विली विराजमानेन ।

---

चरणकिङ्करेण श्रीकामेश्वरीगिरिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्द्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्त्तिपूरपराजिता[१]चलनायकेन संगमतीर[२]दुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण वसन्तपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण[3] अष्टादशगिरिशिखरपरिवारिताञ्जनाद्रि[४]-गिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनधर्षितमहोरगपुरेण[५] श्रीवनदेवस्वामिप्रसादरचनापरमेश्वरेण त्र्यम्बकेश्वरसन्निधिकीर्त्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभीमस्वर्गतायथार्थीकरणरचितचारुपथेन श्रीकामाक्षा[६]गिरिनवीननिर्मितपराजितसुमेरुणा[७] श्रीमहिषाचलोपरि श्रीहरिशरणरचिताचलदुर्गेण[८] अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसंध्याक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजराजश्रीराजमानमृगाङ्कतामरराजनन्दनेन महाराज्ञी[९]सौभाग्यवती[१०] श्रीजसमाम्बिकाहृदयनंदनेन सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंसमहाराज्ञीश्रीकर्मवतीश्रीलघुमादेवीहृदयाधिनाथेन राजाधिराजश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्र्यां सङ्गीतमीमांसायां[११] पाठ्यरत्नकोशे अनुक्रमणिकोल्लासे अनुक्रमणिका नाम चतुर्थं परीक्षणम् ।

उल्लासस्य (श्च) प्रथमः[१२]समाप्तिमगात् ॥

इति विततमतीनामभिमत[१३]-सिद्धिरस्तु ॥

---

१. B. ०पुरपराजित० । २. B. संगमनीर । ३. B. में 'परितोषितशाकम्भरी' नहीं है । ४. B. 'परिवारिताञ्जनाद्रि'; K. में उपरिमुद्रित पाठ ही है । ५. B. धर्षिता । ६. K. कामाक्षा । ७. B. पराजिति सुमेरुणा । ८. B. दुर्गेण । ९. K. में 'श्री' और है । १०. K. में 'जसमाम्बिका' से पूर्व 'श्री' नहीं है । ११. A. संगीतमिमांसायां । १२. B. समाप्ति समगादिति । १३. B. में 'मत' नहीं है ।

## २. पदोल्लास - पदनाम प्रथम परीक्षण

अध्यासिताया निजपूर्वपुंभिः पदं सरीसर्त्ति न यः कदाचित् ।
विशुद्धमत्याः[1] सरणेः स राजा पदं चरीकर्त्ति विचारवर्त्ति[2] ॥ १ ॥

पाठ्यं तु द्विविधं ज्ञेयं संस्कृ[११A]तं प्राकृतं* तथा ।
[3]यथावेदं* तयोरङ्गान्याख्यामः पाठ्यसिद्धये ॥ २ ॥

नामाख्यातोपसर्गाश्च निपातास्तद्धिताः कृतः ।
समासाश्च स्वराश्चैव सन्धयोऽथ विभक्तयः ॥ ३ ॥

व्यञ्जनान्यङ्गकैरेतैर्नानाधातूपबृंहितम् ।
प्रयोगार्हं प्रविज्ञेयं[4] संस्कृतं पाठ्यमित्यदः ॥ ४ ॥

नादादिहेतुको यः स्यादक्षराणां* समुच्चयः ।
आनुपूर्वी समुल्लेखः* स शब्दव्यपदेशभाक् ॥ ५ ॥

साध्यसाधनसंयोगसामानाधिकरण्यकाः* ।
पदार्थप्रतिपत्तिश्च [5]विधिः पञ्चविधः स्मृतः[5] ॥ ६ ॥

अधिष्ठानं स्वभावश्च गुणाः कार्यान्वयस्तथा* ।
तादात्म्यं* चेति शब्दस्य [6]तद्गुणाः पञ्च कीर्त्तिताः[6] ॥ ७ ॥

तस्य सप्तविधं प्राहुरधिष्ठानं पुरातनाः ।
मुख्यतादिस्वभावोऽस्य साध्यादिश्च गुणो मतः[7] ॥ ८ ॥

स सिद्धसाध्यसंबन्धः[8] कार्यान्वयं इतीरितः ।
शब्दस्यार्थस्वभावो यस्तादात्म्यं तत् प्रकीर्तितम् ॥ ९ ॥

---

प्रतिस्थित पाठ— २. *प्राकृतं प्राकृतं । *यथा वेद । ५. *स्यादक्षराण्या समुच्चय । *समुल्लेक्षः । ६. *समानाधिकरण्यकाः । ७. *कार्यान्वियास्तथा । *तदात्म्यं ।

---

1. P. K. विशुद्धिमत्याः । B. विशुद्धिमत्या । 2. P. विचारवर्त्ति(र्त्ती) । 3-3. P. यथावदनयो० । 4. B. स विज्ञेयं । 5-5. P. तद्गुणाः पञ्च कीर्त्तिताः । 6-6. P. विधिः पञ्चविधः स्मृतः । 7. B. गुणोरामः; परन्तु 'र' और 'म' पर क्रमशः २ और १ अंक हैं । 8. P. प्रसिद्धसाध्यसंबन्धः ।

प्रकृतिप्रत्ययासत्तौ पदमर्थोपलम्भने ।
तत्राभिधत्ते यो मुख्यमर्थं* मुख्यः स उच्यते ॥ १० ॥

तथा लाक्षणिको [1]लक्ष्माश्रित* इत्यभिधी[११B]यते[1] ।
व्यङ्ग्ययुक्तो[2] व्यञ्जकः* स्यादेषां व्यापृतिरुच्यते ॥ ११ ॥

अभिधा लक्षणा [3]चाथ व्यञ्ज[ना]क्रमतो मता[3] ।
रूढियौगिक[4]मिश्राख्यास्ते* शब्दास्त्रिविधाः स्मृताः ॥ १२ ॥

प्रकृतिप्रत्ययद्वारा [5]न ते वै रूढिमाश्रिताः*[5] ।
मण्डपाखण्डलाद्यास्तु [6]तत्तद्वृत्तिमुपाश्रिताः[6] ॥ १३ ॥

गुणेन क्रियया वापि सम्बन्धेन च यो भवेत् ।
परस्परार्थानुगमः सम्बन्ध[7] इति [की]र्त्यते ॥ १४ ॥

गुणतो नीलकण्ठाद्याः संख्यातः षण्मुखादयः[8] ।
क्रियातः स्रष्टृप्रमुखाः* संबन्धाद्भू[भु]गादयः[9] ॥ १५ ॥

मत्वर्था* अपि संबन्धे कपालिप्रमुखास्ततः ।
जन्यात् कृत्सूतिधात्र्याद्या विश्वकृत्प्रमुखास्ततः ॥ १६ ॥

जनकाद्योनिमुख्या स्युरात्मयोनिमुखास्ततः[10] ।
अपत्यप्रत्ययाद्येभ्य आदितेयादिकान् जगुः ॥ १७ ॥

धार्यधारकसंबन्धे वृषध्वजपिनाकिनः ।
भोज्यभोजकसंबन्धेऽमृतभुक्ताद्व्रतादयः[11] ॥ १८ ॥

[12]पत्युः कान्ताः प्रियातुल्याः[12] शिवकान्तादिकास्ततः ।
पत्न्याः प्राणेश्वरमुखा गौरीप्राणेश्वरस्ततः ॥ १९ ॥

---

प्रतिस्थित पाठ— १०. *मुख्यमर्थं । ११. *लक्ष्म्याश्रित; *व्यञ्जक । १२. *रूढियोगिकमित्स्याख्याते । १३. *श्रिता । १५. *सृष्टप्रमुखा । १६. *मन्वर्था ।

---

1-1. P. मुख्याश्रितमर्थं ब्रवीति यः; BO. लक्ष्याश्रितमित्यभिधीयते । 2. B. व्यंगयुक्तो । 3-3. K. व्यञ्जनाः क्रमतः समीरिताः । 4. P. रूढयौगिक० । 5-5. P नत्वर्था रूढिमाश्रिताः K. नन्वर्था० ! BO. न ते वै रूढिमाश्रिताः । 6-6 P. K. न व्युत्पत्तिमुपाश्रिताः । 7. P. स योग । 8. P. ख(ष)ण्मुखादयः । 9. P. भुजगादयः । 10. B. मुखास्ततः । 11. P. ०ऽमृतभुक् तद्व्रतादयः; B. ०भुक्तव्रतादयः । 12-12. P. पत्युः कान्ता(:) प्रिया(स्)तुल्याः ।

सख्युः सखिप्रभृतयस्ततः शि[१२A]वसखादयः ।
वृषवाहनमुख्याः स्युर्वाह्यवाहकभावतः ॥ २० ॥

ज्ञातेः* [1]स्वसृदुहित्राद्यैर्हिमवद्दुहितृप्रथाः ।
आश्रयाश्रयिभावेन दिवौकःप्रमुखा अपि ॥ २१ ॥

स्युर्वध्यवधकत्वेन[2] पुरजिन्मुरजिन्मुखाः* ।
[3]पतिधार्यत्वे वाह्यत्वसंबन्धो[3] हि विवक्षया ॥ २२ ॥

रुद्रे वृषात्तदेकस्मात् पतिलाञ्छनवाहनाः ।
स्याद् व्यक्तिवाचको *जातिशब्दोऽपि व्यक्तिचिह्नितः[4] ॥ २३ ॥

दक्षिणा दिग्यथागस्ति[5]निवासत्वेन कीर्त्यते* ।
[6]त्रिपञ्चादिपदे योज्यौ[6] शब्दौ[7] हि विषमायुजौ ॥ २४ ॥

तेन त्रिनेत्रो विषमनेत्रोऽप्युङ्नेत्र[8] इत्यपि ।
गुणो विरोधिनं वक्तीतरान्तो* नञ्पूर्वकः[9] ॥ २५ ॥

सितेतरोऽसितस्तस्मात् कृष्णोऽथो[10]व्यपदिश्यते ।
जलादिषु प्राक्पदेषु पर्यायपरिवर्तनम् ॥ २६ ॥

जलदस्तोयदस्तस्माज्जलधिर्नीरधिस्तथा ।
[11]जनिरुट् प्रभृतिष्वस्त्युत्तरेषु[11] परिवर्तनम् ॥ २७ ॥

सरोरुहं सरोजं च ततः[12] स्यादेवमादिकम् ।
सुरपत्यादिषु[13] प्राय उभयोः परिवर्त्तनम् ॥ २८ ॥

ततः सुरपतिर्देवराजः स्यात्त्रिदशेश्वरः ।
इत्याद्या यौ[१२B]गिकाः शब्दाः परिवृत्त्यसहाश्च ये[14] ॥ २९ ॥

---

प्रतिस्थित पाठ— २१. *ज्ञाते । २२. *पुरजित् पुरुजित् मुखाः । २३. व्यक्ति वाचको । २४. *कीर्त्तते । २५. *वक्तीतरान्तो ।

---

1. P. ज्ञात(ति); BO. ज्ञातेः । B. ज्ञातस्वसृ० । 2. P. ०वधकत्वे तु । 3. P. पतिधार्यत्ववाह्यत्वसंबन्धो । 4. P. व्यक्तचिह्नतः । 5. P. ०यथागस्ति(स्त्य)०; K. यथागस्त्य० । 6-6. P. त्रिपञ्चादिपदे(ऽ)याज्यौ(स्थाप्यौ) । K. त्रिपञ्चादिपदस्थाने । 7. B. शब्दो । 8. P. ०ऽप्ययुङ्नेत्र । K. का पाठ प्रति के समान है । 9. P. नञ्पूर्वकः । K. नञ् न पूर्वकः । 10. K. कृष्णोऽतो । 11-11. P. जनिरुध्प्रभृतिषु तूत्तरेषु ।; A. जनिरुध्प्रभृतिष्वस्युत्तरेषु; B. जनिरुध्प्रभृतिषु स्यूत्तरेषु । P. का पाठ K सम्मत है । 12. B. तत् । 13. P. सुरपत्यादिषु । 14. K. सहाश्रयः ।

गीर्वाणप्रमुखाः शब्दास्ते मिश्राः परिकीर्त्तिताः ।
एतेषां कविरूढयैव ज्ञेयोदाहरणावलिः ॥ ३० ॥

तथा हि समयं प्राहुः कवीनामिह तद्विदः ।
जात्यादिनियमापेक्षमर्थं[1] बध्नंति कुत्रचित् ॥ ३१ ॥

असंतमपि* बध्नंति न सन्तमपि कुत्रचित् ।
दिङ्मात्रमेतदत्रोक्तं नाम्नामन्यान्यपि[2] स्वयम् ॥

कुम्भकर्णोपदेशेन[3] तर्कयेदनया* दिशा ॥ ३२ ॥
यद्यशः पदमाधातुं त्रिलोक्या गोः पदं व्यधात्[4] ।
अपि विष्णुपदं नाम[5] पदं राजा स्थिरीकृतम् ॥ ३३ ॥

[6]इति श्रीराजाधिराज० पदोल्लासे पदपरीक्षणं प्रथमम्[6] ॥ छ ॥

---

प्रतिस्थित पाठ— ३१. *असंतिमपि । ३२. *तर्कयादनया ।

---

1. P. ०पेक्ष्यमर्थं । K. का पाठ प्रति के समान है । 2. A. B. नाम्नामन्यापि; 3. P. कालसेनोपदेशेन । K. कालदेशोप० । 4. A. B. व्ययात् । 5. P. तेन । 6-6. P. इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां सङ्गीतमीमांसायां पाठ्यरत्नकोशे पदोल्लासे पदपरीक्षणं प्रथमं समाप्तम् ॥

## वाक्य नाम द्वितीय परीक्षण

अतीतो वाक्यमार्गं यो वेदमार्गेण मृग्यते ।
वाग्वाक्यादिरूपेण*[1] ततवाक्यं[2] भजे शिवम् ॥ १ ॥

यतः पूर्वं[3] पदार्थोऽयं वाक्यार्थे पर्यवस्यति ।
ततस्तेषां समूहोऽत्र वाक्यं वाक्यविदोच्यते ॥ २ ॥

पदव्यवहृतिर्वाक्ये पदबन्धाङ्गतो[4] मता ।
द्विविधं तत्पदं ज्ञेयं निबद्धं चूर्णमेव च ॥ ३ ॥

तत्र चूर्णपदस्यादौ लक्षणं संगृणाम्यहम् ।
[5]अनिबद्धपदं छन्दोहीनं* चा[१३A]नियताक्षरम्[5] ॥ ४ ॥

अर्थापेक्षाक्षरोपेतं ज्ञेयं चूर्णपदं बुधैः ।
यतिच्छन्दः[6]समायुक्तं तथा च[7] नियताक्षरम् ॥ ५ ॥

पादैश्चतुर्भिर्नियतं निबद्धं पदमीरितम् ।
एवं नानार्थसंयुक्तैः पदैर्वर्णविभूषितैः ॥
पदबन्धाः प्रकर्त्तव्याः प्रथालक्षणलक्षिताः[8] ॥ ६ ॥

आद्येष्वष्टसु देवता निगदिता वर्गेषु सोमः कुजो
ज्ञेज्यो* शुक्रशनी रविस्तम इति स्यात्तत्फलं च क्रमात् ।
आयुर्वाच्यपदं धनं सुभगता कीर्तिश्च मान्द्यस्मृतिः
शून्यत्वं मुखतस्तदक्षरवशाद् वर्ण्यस्य[9] गीतादिषु ॥ ७ ॥

एवं मित्रावरुणसदनादुच्चरत्प्राणशक्त्या-
संगप्रोद्यत्पवनहतितत्स्थानजीर्णोत्करेण*[10] ।
आरब्धैंतत्पदघटनया[11] कारणं गीतकादे-
र्लोके सर्वव्यवहृतिपदं वाक्यमत्र न्यरूपि[12] ॥ ८ ॥

प्रतिस्थित पाठ— १. *वाकवाक्यादिरूपेण । ४. *छेदोहीनं । ७. *ज्ञेज्यो । ८. *जार्णोत्करेण

1. P. K. वाक्यवाच्यादिरूपेण । B. वाक् वाक्यादिरूपेण । 2. P. K. तमवाक्यं । 3. P. BO. सर्वः । 4. P. पदबन्धागता । B. पदबंधागतो । 5-5. B. अनिबद्धपदं ज्ञेयं छन्दोहीनं चानियताक्षरम् । 6. P. यतिछ(च्छ)न्द(:) । 7. K. तथाऽत्र । 8. P. यथा लक्षणलक्षित:(ताः) । 9. P. वर्णस्य । 10. A. जार्णोत्करेण । 11. P. आरब्धे तत्पदघटनया; B. ०घट्टनया । 12. P. वाक्यमन्यन्न्यरूपि । K. वाक्यमन्यत्र रूपि । A. B. वाक्यमन्यत्र रूपि ।

प्राकृतं चापि विज्ञेयं संस्कृतस्य विपर्ययात् ।
तद्भवं तत्समं देशीत्येवं त्रैविध्यमस्य तु ॥ ९ ॥

स्वरवर्णान्यतां वापि न्यूनतां वापि ये पदे ।
न्यस्ता गच्छन्ति* संयुक्तास्तद्भवास्ते* प्रकीर्त्तिताः ॥ १० ॥

तरङ्गलोलसलिलकमलामललक्षणाः* ।
तुल्याकृ[१३B]तिधरा ये तु संस्कृते ते च तत्समाः ॥ ११ ॥

महाराष्ट्रादिदेशानां भाषामाश्रित्य वर्त्तते ।
यत्तद्देशीति* विज्ञेयं सुज्ञेयमिह[1] तद्विदाम् ॥ १२ ॥

भाषा चित्रप्रबन्धेषु गाथादावुपयुज्यते ।[2]
यद्यप्येतत्तथाप्यत्र* नास्माभिरिह तन्यते ॥ १३ ॥

यद्वाक्यं राजवृन्देन शिरसा विष्णुमाल्यवत् ।
[3]शिरसा धार्यते [ते]न कुम्भेनात्र निरूपितम्[3] ॥ १४ ॥

[4]इति श्रीराजाधिराज श्रीकुम्भकर्ण० वाक्यपरीक्षणं नाम द्वितीयं समाप्तम्[4] ॥



प्रतिलिपित पाठ— १०. *गच्छंति । *तद्भवांस्ते । ११. *कमलामलमलक्षणाः । १२. *यत्त० देशीति । १३. *यद्यप्येतत्तथाप्यत्र ।

1. P. सुज्ञेयम(मि)ह । 2. K. गाथादावुपयुज्यते । 3-3. P. धार्यते राजवृन्देन तेन वाक्यं निरूपितम् । 4-4. इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे गीतरत्नाकरकोशे पदोल्लासे वाक्यपरीक्षणं द्वितीयं समाप्तम् । B. श्रीकाल० सेनेन विरचिते । BO. और प्रति में पाठ समाप्त है ।

# संज्ञा नाम तृतीय परीक्षण

व्याकृते जगतां येन नामरूपे नमाम्यहम् ।
समरूपमनामानं[1] शङ्करं लोकशङ्करम् ।। १ ।।

गीतं वाद्यं[2] तथा नृत्यं त्रयं सङ्गीतसंज्ञितम्[3] ।
त[द्]द्विधा भिद्यते मार्गदेशीभेदेन तत्त्वतः ।। २ ।।

मार्गित्वाद्विरञ्चेन[4] प्रयुक्तत्वात्तथर्षिणा[5] ।
[6]महोदयनिमित्तत्वान्नियतो मार्ग उच्यते[6] ।। ३ ।।

तदेव रुचिवैचित्र्याच्चित्तरञ्जनकृज्जनैः ।
प्रयुक्तं स्वस्वदेशे यत्ततो देशीति कीर्त्तितम् ।। ४ ।।

छादनादपयत्यादेरुक्ताद्यं छन्द ईरितम्[7] ।। ५ ।।

उपमाद्या अलङ्काराः पाठ्यालङ्कृतिहेतवः ।
[8]श्रवणाच्छ्रुतयस्ताश्च तीव्राद्याः स्वर[१४A]हेतवः[8] ।। ६ ।।

स्वरयन्ति मनांसीह श्रोतॄणां स्वार्थतो यतः
षड्जादिकाः* स्वरास्तेन ते च[9] साद्यक्षराभिधाः ।।
यथा गोत्रकुलाचारोत्पन्नं पुंन्नामसंमतम् ।। ७ ।।

तथा ज्ञेया रसानां च स्वराणामभिधा[10] इमाः ।
श्रुत्युत्कर्षापकर्षौ* हि विकृतिः प्रकृतिर्मतौ[11] ।। ८ ।।[12]

व्यवस्थितश्रुतियुता यत्र संवादिनः*[13] स्वराः ।
मूर्च्छनाद्याश्रयो नाम स ग्राम इति संज्ञितः ।। ९ ।।

---

प्रतिस्थित पाठ— ७. *खड्गादिका । ८. *श्रुत्युत्कर्षापकर्षे । ९. *संवासिनः ।

---

1. B. तमरूवनामानं । 2. A. गीतवाद्य । 3. P. संगीतमुच्यते । 4. P. विरिञ्चेन । 5. P. प्रयुक्तत्वात्तया(थ)षिणा । 6-6. P. महोदयनिमित्तत्वाद् विख्यातो मार्ग उ(च्य)ते; B. ०निमित्तत्वाद्विषयतो । 7. B. इरितम् । 8-8. P. में यह पंक्ति आगे ८वें पद्य का उत्तरार्ध है । 9. P. चे त (ते च) । 10. P. स्वरानामभिधा । 11. P. प्रकृतिर्मतो(ता) । 12. P. ८ वाँ श्लोक इस प्रकार है—

विभूषयन्ति च रसं केयूरादिवदङ्गिनाम्(नम्) ।
श्रवणाच्छ्रुतयस्ताश्च तीव्राद्याः स्वरहेतवः ।। ८ ।।

13. P. संवासि(दि)नः ।

आरोहेणावरोहेण क्रमेण स्वरसप्तकम् ।
रागादेर्मूर्च्छनादत्र[1] मूर्च्छना परिकीर्त्तिता ॥ १० ॥

ता एव शुद्धतानाः स्युः षाडवौडविकाः स्मृताः[2] ।
पूर्णापूर्णविभेदेन द्विधा या मूर्च्छना स्मृता* ॥ ११ ॥

ता एव कूटतानाः* [3]स्युर्व्युत्क्रमोच्चरिताः स्वराः[3] ।
प्रस्तारे पूर्वरूपाणि तेषां मूलक्रमाः स्मृताः ॥ १२ ॥

साधारणीकृताशेषभूभुजा कुम्भभूभुजा[4] ।
साधारण्यात् स्वरजात्योः साधारणमिहोदितम् ॥ १३ ॥

स्थाय्यादिभिश्चतुर्द्धासौ[5] वर्णो गानक्रियामतः ।
एक एव स्वरो यस्तु स्थित्वा स्थित्वा पुनः पुनः ॥ १४ ॥

प्रयुज्यते स तु स्थायी परावन्वर्थनामकौ ।
आरो[१४B]ही वाऽवरोही[6] च संचारी तद्वियोगजः ॥ १५ ॥

प्रतिपक्षक्षमापालभालालङ्काररूपिणा ।[7]
विशिष्टो वर्णसङ्घातोऽत्रालङ्कार उदीरितः[8] ॥ १६ ॥

अतारविश्रम[9]स्वांशापन्यास[न्यास]भूषणात् ।
क्रियते कुम्भभूपेन[10] शुद्धजातिपरिग्रहः ॥ १७ ॥

स्वनामस्वरविश्रामविशिष्टत्वेन तद्बहिः ।
शुद्धलक्ष्मविनाभूता विकृताः किं न[11]सम्मताः ॥ १८ ॥

गीतमुद्ग्राह्यते येन स स्वरो ग्रह उच्यते ।
प्रयोगे बहुलोंशः स्यान्न्यासो गीतिसमाप्तिवत् ॥ १९ ॥

विदारी गीतखण्डः* स्यादपन्यासस्तदन्तकृत् ।
विन्यासः स विदार्यंश[12]पदप्रान्ते स्थितस्तु यः ॥ २० ॥

---

प्रतिस्थित पाठ— ११. *स्मृताः । १२. *कूटताना । २०. *खंडं ।

---

1. A. रागादेमूर्च्छनावत्र; B. रागादेमूंछनादत्र । 2. P. षाडवौडुवितीकृताः । 3-3. P. स्युर्व्यु त्क्रमोच्चारितस्वराः । 4. P. तामराजिना । 5. B. स्थायादिभिश्चतुर्धासौ । 6. P. चावरोही । 7. P. ०भालं(ला)लंकाररूपिणा । 8. P. उरीकृतः । 9. B. अतारविःश्रम । 10. P. कालसेनेन । 11. A. कि न; P. किं न (तु); किं च' भी संभव पाठ है । 12. B. विदार्यंस ।

अंशाविवादी [1]सन्यास: कुम्भस्वामिगणोदित:[1] ॥ २१ ॥

यस्मात्तारस्य[2] मंद्रस्य च मतिरनुवादी च[2] संवादिसंज्ञे–[3]
त्यस्यान्य:[4] स्याद्विवादी स्वर* इह जनयेद्यश्च गेयेऽत्र रक्तिम् ।
न्यासापन्याससन्यासकविधिकलसन्यासवर्गे ग्रहत्वं
प्राप्तोंशो योग्यतातो भवति च बहुलो यो विदार्यां स वादी ।। २२ ।।

रा[जा] स: स्याद्विवादी रिपुरि[व] विवदन् मुख्यमंत्रीव त[१५B]स्मिन्
संवादी संवदन् योऽनुवदति[5] खलु तं* सोऽनुवादी स्वरोऽस्मिन् ।
अंशत्वं व्यापकत्वे* सति पुनरुदितं गेयकर्मण्यमुष्य[6]
क्षोणीसुश्रोणिभर्त्ता[7] तदनु च बहुशो[8] गानतानप्रयोगे[9] ॥ २३ ॥

षाडवं* षट्स्वरं प्रोक्तं तत्पञ्चस्वरमौडवम्* ।[10]
[11]पुनरावृत्तिरभ्यासात् परामर्शोऽत्र[11] लङ्घनम् ॥ २४ ॥

अलङ्घनं तथाभ्यासो बहुत्वे लक्ष्म चक्षते ।
वादिसंवाद्यनपरंपर्यायं[12] तु तदिष्यते ।
अलङ्घ्यविषयो[13]ऽल्पत्वबहुत्त्वस्य विपर्ययात् ॥ २५ ॥

हित्वा न्यासादे: स्थितिं य: स्वराणां
मध्ये [14]मध्येऽल्पत्वमाहुश्च केचित्[14] ।
सङ्गोंऽशाद्यै: कोऽपि वैचित्र्यहेतु:
प्रोक्तो मार्ग: सोऽन्तराख्य: स्वरज्ञै: ।। २६ ॥

अल्पप्रयोग: सर्वत्र काकली चाऽन्तरस्वन:[15] ॥ २७ ॥*

---

प्रतिस्थित पाठ— २२. *स्याद्विवादीश्वर । २३. *त । *त्यापकत्वे । २४. *षांडवं; *०मौंडवं । २८.*इस अर्द्धाली पर २६ के बाद सीधा २८ पद्यांक दिया है ।

---

1-1. P. संन्यासो वनदेवगणोदित: । 2-2. P. K. ०गतिरनुवादी च । A. B. मंद्रस्याव-गतीरनुवादी च । 3. P. K. संवादिसंज्ञो । 4. P. यस्यान्य:; A. य: स्यान्य: ; B. में 'य:' के बाद दो तीन अक्षरों का स्थान रिक्त है फिर 'स्याद्विवादी' है; K. य: स्याद्वावी विवादी । 5. A. B. यो ननु वदति । 6. B. शक्तिम् । 7. P. भर्त्री । 8. P. बहुलत्वं । 9. P. सुगानप्रयोगे । 10. P. ०मौड(डु)वम् । 11-11. P. पुनरा-वृत्तिरभ्यास ईषत्स्पर्शोऽत्र । 12. P. वादिसंवाद्यनपर्यायं । 13. P. अनंशविषयो । 14-14. P. मध्येऽल्पत्वभाजां कदाचित् । 15. P. चान्तर: स्वर: ।

मन्द्रप्रसन्नो मृदुसञ्ज्ञकश्च
लिपौ भवेद्बिन्दुशिराः स एव ।
तारस्तु दीप्तः परमूर्द्धरेखा[1]
शिरालिपौ* त्रिर्वचनात् प्लुतः*[2] सः ॥ २८ ॥[3]

स्यान्मूर्च्छनायाः प्रथमः स्वरोऽत्र
मंद्रः स एव द्विगुणस्तु तारः ।
तत्पूर्वपूर्वो भवतीह मंद्रः*
[4]परोऽपरोऽन्यः स विभूषितश्च[4] ॥ २९ ॥

स्वरसाधारणमुदितं[१५B]मम येष्वंशेषु[5] नियतमनुरूपम् ।
पञ्चमिकामध्यमिकाजात्योस्तु सषड्जमध्यमयोः ॥ ३० ॥

अल्पद्विश्रुतिकासु जातिषु* तथा रागेषु भाषास्विदं
तावंशौ* यदि षड्जमध्यमिकया न स्यात् सहस्थास्नुकम्* ।
एवं कैमुतिकेन[6] निश्चितमिदं तस्यापि तत्राश्रयाः[7]
प्रायः स्युर्विकृता[8] इहैव भणितौ श्रीचित्रकूटेशितुः[9] ॥ ३१ ॥

सलयतालपदा स्वरराजिता
विविधवर्णविभूषणभूषिता ।
गमकपेशलगानगुणाञ्चिता[10]
मुनिवरैरिह गीतिरुदाहृता ॥ ३२ ॥

विचित्रवर्णालङ्कारो विशेषो[11] यो ध्वनेरिह* ।
ग्रहादिस्वरसंदर्भो रञ्जको राग उच्यते ॥ ३३ ॥

तत्र[12]ग्रामसमुद्भूतः पञ्चगीतिसमाश्रयात्[12] ।
शुद्धादिभेदसंभिन्नो ग्रामराग इतीरितः ॥ ३४ ॥

---

प्रतिस्थित पाठ— २८. *लपौ । *प्लुता । २९. *मंद्राः । ३१. *अथ द्विजातिस्वर-जातिषु; *तोवंशौ । *सहस्थाणुकम् । ३३. *ध्वनेरिह ।

---

1. P. परमूर्घ(र्ध्व)रेखा । 2. P. प्लुत सः । 3. P. में पद्य संख्या यहां २८ है जो सही है; प्रति में एक संख्या आगे चल रही है । 4-4. P. परः परोऽन्यः स विभूषणेषु । 5. P. समपेष्वंशेषु । 6. P. कौतुकिनात्र (कैमुतिकेन) । A. कौमुतिकेन । K. कौतुकिना । 7. P. तत्रापि तस्याश्रयाः । 8. B. स्युर्वीकृता । 9. P. श्रीब्रह्मशैलेशितुः । 10. B. गानपुणांचिता । 11. P. विशेषे(षो) । 12-12 P. ग्रामसमुद्भूतपञ्चगीतिसमाश्रयात् ।

तदुद्भवश्चोपरागो रागो रञ्जनकृत्तमः ।
भाष्यते[1] येन तच्छाया[2] स भाषाराग[3] उच्यते ॥ ३५ ॥

तां मिश्रित्य*[4] प्रवृत्ता या विभाषा भाषिताऽत्र सा ।
भाषाविभाषयोरन्तरुत्पन्नान्तरभाषिका ॥ ३६ ॥

भाषाद्या गीतयस्तिस्रो या[१६A]ष्टिकेनोररीकृताः[5] ।
तत्र भाषा समाख्याता मुख्यानन्योपजीविनी ॥ ३७ ॥

स्वरनाम्ना स्वराख्या तु देशाख्या* देशनामतः ।
आभ्यस्तिसृभ्यो* जायन्ते[6] यास्ताः स्युरुपरागजाः ॥ ३८ ॥

स्वजात्युद्योतकत्वे येऽनुवर्त्तन्ते तु तामिह* ।
अन्यजातिविरूपा ये ते शुद्धा राजसम्मताः[7] ॥ ३९ ॥

श्रुतिभिश्च स्वरैश्चैव शुद्धत्वेन च जातिभिः ।
चतुर्भिर्भिद्यते यस्तु स भिन्न इति कीर्त्यते ॥ ४० ॥

रागाङ्गत्वं ग्रामरागच्छायामात्रोपजीवनात् ।
भाषाणामाश्रिता छाया यैस्तदङ्गानि तानि च ॥ ४१ ॥

क्रियाङ्गानि च कथ्यन्ते दीपिकादिक्रियायुजे[8] ।
श्रोतृचित्तोत्साहकमुखयोगाच्च[9] कोविदैः* ॥ ४२ ॥

अङ्गाश्रयसमुत्पन्नान्युपाङ्गानि च मेनिरे ।
देशीरागत्वमप्यस्य 'रागाङ्गादेरुदीरितम् ॥ ४३ ॥

पदं वागभिधेयं[10] स्यात् सा मातुरभिधीयते ।
गेयं धातुस्तयो[:]कर्त्तोच्यते* वाग्गेयकारकः ॥ ४४ ॥

गान्धर्वो*[11] मार्गदेशीवित् स्वरादेर्मार्गकोविदः[12] ।
गान्धर्वं तत्र विज्ञेयं स्वरतालपदात्मकम् ॥ ४५ ॥

---

प्रतिस्थित पाठ— ३६. *तामिश्रित्य । ३८. *देशाख्यो * अभ्यस्तिसृभ्यो । ३९. *नामिह ।
४२, *कोविदे । ४३. *देशीयराग० । ४४. *धातुस्तयोऽकर्त्तोच्यते ।
४५. *गंधर्वो ।

---

1. P. भाव्यते । 2. P. तछ्रा(च्छा)या । 3. P. भार्षा(षा)राग । 4. P. तामाश्रित्य । 5. P. याष्टिकेयो(नो)० । 6. K. भिद्यन्ते । 7. P. राज(ग)सत्तमाः (राजसम्मताः) । 8. P. दीपकादिक्रियायुजेः । 9. P. ०करणयोगाच्च । 10. P. वागभिधेया । 11. B. गंधर्वं । 12. P. स्वरादिर्मार्गकोविदः ।

पुरा प्रणष्टां देवेभ्यो वाचं गोरूपधारिणीम् ।। [१६B]
अधारयदिति प्रोक्तं गान्धर्वमिह सूरिभिः ।। ४६ ।।
अत्यर्थमिष्टं देवानामत एव प्रकीर्त्तितम् ।
वंशवीणाशरीरेभ्यः प्रभवस्तस्य सम्मतः ।। ४७ ।।

**तथा चोक्तं—**

[1]पदस्थस्वरसङ्घातस्तालेन[1] सुमितस्तथा ।
प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते ।। ४८ ।।
[2]पुनर्गीति पुनर्वाद्यं गेयं[2] योज्यं पुनः पुनः ।
[3]अलात*चक्र प्रतिमरसभावविभावकम्[3] ।। ४९ ।।
श्रोतुश्चित्तस्य सुखदो गमकः स्वरकम्पनम् ।
स च वाग इति स्थायो[4] रागस्यावयवः स्मृतः ।। ५० ।।
यत्नतो[5]ऽतिशयारोपो रागस्य भजनं मतम् ।
गमकस्थायवर्णाद्या नानालङ्कृत्यलङ्कृताः[6] ।। ५१ ।।
रागाल(ा)पनमालप्तिर्भूरिभङ्गिमनोहरा ।
प्रयोगाढ्या* तथालापसंज्ञा साक्षरवर्ज्जिता ।। ५२ ।।
अनिबद्धं च तामाहुर्गीतं गीतविशारदाः
गातॄणां वादकानां[च] समूहो वृन्दमुच्यते ।। ५३ ।।
रागोऽभिधीयते गीतं दशलक्षणलक्षितः ।
लक्षणानि च तत्रांशन्यासौ षाडवमौडवम्[7] ।। ५४ ।।
अल्पत्वं च बहुत्वं च ग्रहोपन्याससंयुतः ।
मन्द्रताररता[8] चापीत्येवं ज्ञेयानि सूरिभिः ।। ५५ ।।
प्रबं[१७A]धो रूपकं वस्तुनिबद्धं गीतमुच्यते ।
निबद्धावयवो धातुर्धराधीशस्य[9] सम्मतः ।। ५६ ।।

---

प्रतिस्थित पाठ— ४९. *आयातचक्रप्रतिम० । ५३. *प्रयोगाह्वा ।

---

1-1. P. पदस्य(:)स्वरसंघात(स्)तालेन । 2-2. P. पुनर्गीतं पुनर्वाद्यमेवं; B. पुनर्वाद्यमेव । 3-3. P. अलातचक्रप्रतिमं रसभावविभावकम् । 4. P. स्थायी । 5. P. यत्ततो । 6. P. ०कृता । 7. P. षाडवमोडुवम् । 8. P. मंद्रता तारता । 9. P. धातुध(र्ध)-राधीशस्य ।

कलाकालप्रमाणेन ताल इत्यभिधीयते ।
अर्द्धमात्रा[1] द्वे च तिस्रो द्रुतो लघुगुरुप्लुताः ॥ ५७ ॥
क्रमात्तेषां चतुर्णां स्युः संज्ञा दलगपा[2] इति ।
*० ० ० ० ० ० ० ० ० ० ० ० ०
[द्रुते स्याद्देवता शम्भुर्हिमवद्दुहिता लघौ ।
शिवौ गुरुणि संप्रोक्तौ प्लुते ब्रह्मादयस्त्रयः ॥ ५८ ॥]*
*द्रुते व्यञ्जनं व्योम बिद्वर्धमात्रं
लघौ व्यापकं ह्रस्वमृज्वेकमात्रम् ।
गुरौ वक्रदीर्घो*[3] कला च द्विमात्रं
प्लुते सामजत्र्यङ्गदीप्तत्रिमात्रा* ॥ ५९ ॥
द्रुतलघ्वादिरूपाढ्य*क्रियामानोपलक्षितः ।
गीतादिकं परिच्छिन्दन्[4] कालस्ताल इतीरितः ॥ ६० ॥
पञ्चलघ्वक्षरोच्चारमिता मात्रा कलाऽत्र सा[5] ।
मार्गभिन्नलयोपेता छोटिका चात्र मार्गिता ॥ ६१ ॥
ततः कलाकालकृतो लयः सलयमीरितः* ।
तत्प्रवृत्तेर्नियमनं यतिर्यतिभिरीरिता ॥ ६२ ॥
ततं वीणादि सुषिरं*[6] वंशादि मुरजादि च ।
आनद्धं* च[7] घनं कांस्यतालादिपरिकीर्तितम्[8] ॥ ६३ ॥
वाद्यवर्णसमूहस्तु पाटः पटुधियां मतः ।
वाद्यमात्रोच्यते तत्तत् पाणियोगेन वादनम् ॥ ६४ ॥
रूपादिकं तत्करणं वाद्यप्रकरणे मतम् । [१७B]
स्वरास्ते धातवः प्रोक्ता ये प्रहारविशेषजाः ॥ ६५ ॥
गुणप्रधानभावेन याऽसौ व्यवहृतिर्मता ।
वृत्तिर्निगद्यते साद्या वाद्यविद्याविशारदैः ॥ ६६ ॥

---

प्रतिस्थित पाठ— ५८. *–*बिन्दुओं द्वारा स्थान रिक्त छोड़ा गया है; कोष्ठान्तर्गत पद्य नहीं है। ५९. *यहां 'ए' अक्षर और लिखा है। *बिवर्धमात्र । *मात्राः। ६०. *रूपाद्य० । ६२. *०मीरिति: । ६३. *छुखिरं । *अनद्धं ।

1. P. अर्ध(र्धं) । 2. P. दलपगा(गपा) । 3. A. दीर्घो । 4. A. B. परिछिदन् । 5 P. कला च सा । 6. P. सुखि(षि)रं । 7. P. अवनद्धं । 8. P. कांस्यं तालादि० ।

गीतानुगं त्रिःप्रकारं [1]वाद्यं ततादिकं* मतम्[1] ।
विन्यासाः पाटवर्णानां वाद्यानि मुरजादिषु ।। ६७ ।।

स्कन्धादिकम्पः सञ्चः स्यात् कोणः कुणप[2] इत्यपि ।
वीणादिवादनो दण्डः प्रवीणैरुपवर्ण्यते ।। ६८ ।।

उद्ग्राहा विविधा वाद्यप्रबन्धाः पाटवर्णजाः ।
विभावयन् विचित्रार्थनङ्गाद्यैर्यः प्रयोगतः ।। ६९ ।।

रसाविर्भाविको द्रष्टुर्नृत्यार्थाभिनयस्तु[3] सः ।
स चतुर्द्धा बुधैर्ज्ञेयस्तत्राङ्गैर्दर्शितो मतः ।। ७० ।।

आङ्गिको वाचिकश्चैव नाटकादिषु तत्त्वतः ।
तान् वा[4] विरच्यते यस्तु विज्ञेयः सात्त्विकः पुनः ।। ७१ ।।

विभावितस्तु यो भावैः सात्त्विकैर्भाविकैर्न हि[5] ।
आहार्यः स तु विज्ञेयः किरीटादिविभूषणैः ।। ७२ ।।

शोभामाहृत्य जनितो नटेऽनुकृतितस्ततः[6] ।
तत्राङ्गोऽभिनयस्यैतत्[7] त्रयं मुख्यं प्रकीर्तितम् ।। ७३ ।।

शाखा चैवाङ्कुरश्चैव नृत्तं चेति समासतः ।
व्यापा[१८A]राः करयोर्येऽत्र[8] विचित्रार्थविबोधकाः ।। ७४ ।।

ते स्मृता वर्त्तनास्तज्ज्ञैस्ताः शाखाः परिकीर्तिताः ।
भूतवाक्यार्थविषयमुपजीव्य प्रवर्तितः ।। ७५ ।।

चित्तवृत्त्यर्पकोऽङ्गानां[9] व्यापाराङ्कुर ईरितः[10] ।
स एव सूचीसंज्ञः[11] स्याद्भाविवाक्योपजीवकः ।। ७६ ।।

अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ।
एतच्चतुर्द्धाभिनयेनोपेतं नाट्यमुच्यते ।। ७७ ।।

---

प्रतिस्थित पाठ— ६७. *तत्त्वादिकं ।

---

1-1. P. मतं वाद्यं ततादिकम् । 2. P. कुल(त ?)प । 3. P. द्रष्टुर्नटेऽर्थोभिनयस्तु सः । 4. P. वाचा । 5. P. सात्त्विकैर्भाविकेन हि ।; BO. में भी यहां पाठान्तर नहीं है । 6. P. नटेऽनुकृतितः सतः । 7. P. तत्राङ्गाभिनयस्येतत् । 8. P. करयोर्यंत्र । 9. P. चित्तवृत्त्यर्थकोऽङ्गानां । 10. P. व्यापारोऽङ्कुर इ(ई)रितः । 11. P. सूचासंज्ञः ।

नृत्यं तत्राङ्गिकैरेवाभिनयैर्व्यञ्जकं तु यत् ।
भावानां मार्गशब्देन तदेवात्रोपवर्णितम्[1] ॥ ७८ ॥

[ ... ... ... ... ... ... ... ][2]
नाट्यादित्रितयं ह्येतत् द्विविधं परिकीर्तितम् ॥ ७९ ॥

लास्यताण्डवभेदेन तत्र लास्यं तदुच्यते ।
ललनाललिताङ्गैर्यत् साधितं कामवर्द्धनम् ॥ ८० ॥

आसारितादिभिर्गीतैरुद्धतप्रायवर्द्धितैः*[3] ।
करणैरङ्गहारैश्च निवृत्तं विषमैरिह ॥ ८१ ॥

ताण्डवं तण्डुना* प्रोक्तं नृत्तं नृत्तविदो विदुः ।
केचिद् भेदत्रयं चान्यन्* नृत्तस्याहुर्मनीषिणः[4] ॥ ८२ ॥

विषमं विकटं लघ्वित्यत्र तद्विषमं मतम् ।
यदभ्यासवशाद्रज्जुभ्रमणादि प्रदृश्यते ॥ ८३ ॥

विकटं रूपवेषादौ वैरूप्येण* प्रवर्तितम् । १८B]
लघु[5] स्यात् करणैरल्पैरञ्चिताद्यैर्विशेषितम् ॥ ८४ ॥

नन्वत्र नाट्यशब्दोऽयं नर्त्तने*वर्त्तते कथम् ।
यतोऽ[त्र] मुख्यया वृत्त्या रसाविर्भावकत्वतः[6] ॥ ८५ ॥

अभिधत्ते रसं नैतद्वृत्त्या लक्षणया कथम्[7] ।
रसाभिव्यञ्जकत्वेनाभिनयादि चिकीर्षता[8] ॥ ८६ ॥

नर्त्तने नाट्यशब्दोऽयं वर्तते नात्र दूषणम् ।
अभिनेयपदार्थस्योल्लेखने प्रक्रिया पुनः ॥ ८७ ॥

---

प्रतिस्थित पाठ— ८१. *वर्तितैः । ८२. *तडुना । *चान्य । ८४. *नैरूप्येण । ८५. *वर्त्तने ।

---

1. P. तदेवात्रोपदर्शितम् । 2. P. में इस स्थान पर यह पद्य और है; BO. के पाठान्तरों में इस पद्य का उल्लेख नहीं है—अतः यह उसमें भी होगा—

आङ्गिकोक्तेन विधिनाभिनयैर्वद्विना कृतम् ।
गात्रविक्षेपणं तद्धि[1] नृत्तमत्रोपवर्णितम् ॥ ७९ ॥

3. P. ०प्रायवर्द्धनैः । 4. P. नृत्यस्याहुर्मनीषिणः । 5. P. लघुः । 6. B. रसाविर्भावकात्ततः । 7. P. स्वयम् । 8. P. चिकीर्षतः ।

---

१. B तत्रद्धि ।

कुत्रचिल्लोकधर्मीति नाट्यधर्म्यपि* कुत्रचित् ।
तत्रादौ लोकधर्म्यास्तु लक्षणं प्रोच्यते मया ॥ ८८ ॥

स्वभावाच्चेतसो वृत्तेरुपगन्त्री विवर्जिता ।
विकारेण विशुद्धा च लोकवार्ता क्रियायुता ॥ ८९ ॥

स्वभावाभिनयोपेता ह्यङ्गलीला* विना कृता ।
नानास्त्रीपुंश्रिता लोकधर्मी नाट्यक्रिया स्मृता ॥ ९० ॥

न श्रूयते यत्र वाक्यं योग्यं श्रवणकर्मणा[1] ।
अनुक्तमपि वा यत्र श्रूयते कुतुकादिव* ॥ ९१ ॥

लोके यदप्रसिद्धं तु नाट्ये किञ्चित्[2] प्रयुज्यते ।
मूर्त्तिमत् साभिलाषं च नाट्यलक्षणलक्षितम् ॥ ९२ ॥

अतिवाक्यक्रियोपेतं स्वरालङ्कारसंयुतम् ।
लीलाङ्गहाराभिनयं रागाभिव्यक्तिकारणम् ॥ ९३ ॥

अश्वस्थपुरुषोपेतमतिसत्त्वविभावकम् ।
शैलयानविमानानि चर्मवर्मायुधध्वजाः[3] ॥ ९४ ॥

मूर्त्तिमन्तः प्र[१९A]युज्यन्ते नृत्यते गम्यतेऽपि वा ।
ललितैरङ्गविन्यासैस्तथाक्षिप्तपदक्रमैः ॥ ९५ ॥

सुखदुःखक्रियारूपः स्वभावो यस्तु लोकगः ।
सोऽङ्गाभिनयसंयुक्तो[4] दिव्यमानुषरक्तिदः ॥ ९६ ॥

ब्रह्मोक्तश्चेतिहासोऽयं नाट्यधर्मीति कीर्त्तिता (तः ?)।
यस्मात् सर्वोऽपि रागोऽयं नह्यङ्गाभिनयादृते ॥ ९७ ॥

सर्वोऽप्यभिनयो ह्येष पदार्थज्ञानसंभवः ।
अङ्गालङ्कारचेष्टादि नाट्यधर्मे[5] प्रतिष्ठितम्* ॥ ९८ ॥

अङ्गानि शिर आदीनि प्रत्यङ्गानि तथैव च ।
ग्रीवादीनि तथोपाङ्गं दृष्टिपार्ष्ण्यादिकं[6] मतम् ॥ ९९ ॥

---

प्रतिस्थित पाठ— ८८. *धर्मपि । ९०. *ह्यंगलीला । ९१. *कुतकादिव । ९८. चेष्टाश्चेनाट्यधर्मा प्रतिष्ठितं ।

---

1. P. श्रवणकर्मणः । 2. P. केचित् (कश्चित्) । 3. A. चर्मधर्मायुधध्वजाः; B. चर्मधर्मायुध० । 4. A. संयुक्तौ । 5. P. नाट्यधर्म्या । 6. P. दृष्टिपार्श्वादिकं ।

व्यञ्जका: स्युर्मनोवृत्तेर्मुखरागा रसाश्रया: ।
करप्रचारा: करयोर्व्यापारा: करणानि च ॥ १०० ॥

क्रियाविशेषो हस्तस्य स्वतन्त्रोऽभिनयाय[1] य: ।
निष्पत्तिर्विषये तानि ध्वननाद्यास्तु[2] तत् क्रिया: ॥ १०१ ॥

विश्रान्तिस्थानकं क्षेत्रं सविलासं करस्य तु ।
सविलासा रसोपेता[:] करपादादिकक्रिया:[3] ॥ १०२ ॥

कारणं नृत्यकरणं तदेव परिकीर्तितम् ।
[4]तदेवोत्प्लुतिपूर्वं स्यादुद्धतप्रायनर्त्तने[4] ॥ १०३ ॥

अङ्गहारोऽङ्गविक्षेप: करणैरुपबृंहित: ।
चालनं करपादादे* रेचक: सविलासकम् ॥ १०४ ॥

विचित्रं चरणादीनां कर्म चारीसमं कृतम् ।
चारणं[5] चरणं चित्रं मण्डलं संप्रचक्ष[१९B]ते ॥ १०५ ॥

स्थानं स्यादक्रिय: कश्चित्* सन्निवेश: शरीरग: ।
तदर्थसाधनी[6] चेष्टा वाङ्मन:कायसंभवा ॥ १०६ ॥

वृत्ति: स्यात् स्वान्यशस्त्राणां[7] कर्त्तुं पातमपातने*[8] ।
उचिता नर्त्तनाङ्गस्य[9] संग्रामे न्याय उच्यते ॥ १०७ ॥*

[मनोहरा स्थिती रेखा त्वङ्गानां मेलके सति ॥
योग्य: श्रमविधि:[10] पात्रं नर्त्तनाधार इष्यते ।]* ॥ १०८ ॥

तदेव गोण्डलीं प्राहु: स्वयं गायनदर्शनात्[11] ।
स्यादाचार्य उपाध्याय:[12] संप्रदायस्तु तद्विदाम् ॥ १०९ ॥

वृन्दमाहु: पद्धतिश्च नृत्यस्य परिपाटिका ।
वर्णाकैरुपलिप्ताङ्गो लयतालविचक्षण: ॥ ११० ॥

---

प्रतिस्थित पाठ— १०४. *०पादारे । १०६. कश्चि । १०७. *पद्य सं० १०७ नहीं है ।
१०७. *पातमयातने । १०८. *यह पद्य प्रति में नहीं है ।

---

1. B. स्वतन्त्राभिनयाय । 2. P. घूनानद्यास्तु । 3. P. करपादादिका क्रिया ।
4-4. P. तदेवो(त्)प्लुतिपूर्वं स्यात् उद्धतप्रायनर्त्तने । 5. P. चारीणां । 6. P. पुमर्थसाधनी ।
7. B. शास्त्राणां । 8. P. च्यावनपातने । BO. पातमपातने । 9. P. घर्त्तनाङ्गस्य ।
10. BO. गेयविधि: । 11. P. गायननर्त्तनात् । 12. P. उपाध्याय(:) ।

सभाजनमनोहारी यो नृत्यति स प्रेरणी[1] ।
नटोऽभिनयवेदी स्यान्नर्त्तको मार्गनृत्यवित् ।। १११ ।।

रस्यते यः सहृदयैः स रसो रसिकप्रियः ।
शेषं स्वावसरे लक्ष्माभिधास्ये[1] लक्ष्मविन्मुदे[2] ।। ११२ ।।

भूभृत्त्वं भूभृतां येन कुटुम्बीकरवत्*[3] कृतम् ।
संज्ञायै केवलं तेन राज्ञा संज्ञा निरूपिता ।। ११३ ।।

[4]इति श्रीराजाधिराज श्री कुं० पदोल्लासे रसपरीक्षणं तृतीयं समाप्तम् ।। छ ।।[4]

---

प्रतिस्थित पाठ— १११. *पेरणी । ११३. *कुटंबीकरवत् ।

1. A. B. लक्ष्म्याभिधास्ये । 2. A. लक्ष्म्यविन्मुवे । 3. P. कुटुम्बीकरणात् ।
4-4. P. इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे पाठ्यरत्नकोशे पदोल्लासे संज्ञापरीक्षणं तृतीयं समाप्तम् ।।

# परिभाषा नाम चतुर्थ परीक्षण

पुमानिति परात्मेति[1] कर्त्तेति परिभाष्यते ।
यस्तीर्थिकैस्तमीशानं* भाषातीतं नमाम्यहम् ॥ १ ॥
अंशान्मध्यमसप्तक[2]स्थि[२०A]तवतस्तारावधाव(ा)व्रजेत्—
तारस्थांश्चतुरः स्वरानिह ततोऽव्वाक्कामचारः[3] स्मृतः ।
आरो[हा]दपि[4] तारषड्जमवधिं तं* नन्दयन्त्यां विधा–
यारोप्यो गणनाविधाविह परं लुप्तस्वरोऽप्याहृतैः ॥ २ ॥
अंशान्मध्यमसप्त वा[5] स्थितव[तो] ह्यामन्द्रकस्थांशकं*
मन्द्रन्यासकमाप्य[6] वा तदधरत्रिश्रुत्यवस्थावधि ।
कार्यं जात्ववरोहणं निगदिता सीमा परेयं सदा
मन्द्रस्थानगतेरतोऽवगमनेऽव्वाक्कामचारः[7] स्मृतः ॥ ३ ॥
पूर्णत्वे सति षाडवौडुवकृतोरल्पत्वमत्यल्पता[8]
वाक्यादेव विधीयते क्रमतया प्राप्तापि विद्या ततः[9] ।
पञ्चम्यां तु विपर्ययेण[10] भवतो जातो यतस्ते* द्वयोः
प्राप्तौ तत्परिसंख्ययैकवचनं प्रायोऽभिधेयास्पदम्[11] ॥ ४ ॥
ये[12] प्रयोगमवन्तीह मिलित्वा षट्स्वरास्तु ते ।
षाडवाः षट्स्वरं[13] गीतं षाडवं तद्भवत्वतः[14] ॥ ५ ॥
यस्मिन् वांत्युडवस्तदुक्तमुडुवं[15] भूतेषु तत्पञ्चमं
तत्संख्यौडुविकावशेन गदिताः पञ्चस्वरास्त्वौडुवाः ।
संञ्जातास्त इमे तदौडुवितमत्रोक्तं तु गीतं बुधैः
संबन्धास्तत[16] एव वि[२०A]श्रुतिमगात्[17] पञ्चस्वरं त्वौडुवम् ॥ ६ ॥*

---

प्रतिस्थित पाठ— १. *यस्तीर्थैं कैंस्तमीशानं । २, *बधितं । ३. *०स्यांकशं । ४. *यस्ते ।
५. *५ का अंक पुनः दोहराया गया है और यही क्रम आगे तक चालू रहा है ।

---

1. B. कुछ स्थान छोड़ कर 'पुमान् परमात्मेति' । 2. P. अंशान् मध्यमसप्तकं । 3. P. ततो वाक्कामचारः । 4. P. आरोहेदपि । 5. P. अंशान्मध्यमसप्तकं । 6. A. B. न्यासकमाद्य । 7. B. गमने वाक्कामचारः । 8. P. षाडुवौडुव० । 9. P. विद्यावता । 10. B. विपर्येण । 11. P. प्रायो विधेयास्पदम् । 12. P. यो(ये) । 13. P. प(ट्)स्वरं । 14. P. तद्भवं ततः । 15. B. यस्मि वात्युडव० । 16. P. संबंधास्तत । 17. B. विश्रुति गात्; 'ति' के बाद स्थान छूटा हुआ है ।

ताल एककले मार्गश्चित्रो[1] गीतिस्तु मागधी ।
द्विकले* वार्त्तिको मार्गो गीतिः संभाविता मता ॥ ७ ॥

चतुष्कले तु पृथुला गीतिर्मार्गस्तु दक्षिणः ।
या जातिषु कला प्रोक्ता सा दक्षिणपथाश्रिता[2] ॥ ८ ॥

चित्रवार्त्तिकयोर्ज्ञेया द्विगुणा द्विगुणा तु सा ।
अंशस्वररसस्तज्ज्ञैर्ज्ञातव्यः सर्वजातिषु ॥ ९ ॥

अंशश्च जन्यरागाणां ज्ञेयो जनकजातिषु ।
स्यातां* मेलापकाभोगौ रूपकेन[3] क्वचित् क्वचित् ॥ १० ॥

यत्र वस्तुकृता* वस्तु नोक्तमाभोगलक्षणम् ।
पदैस्तत्र प्रकर्त्तव्य[4] आभोगो गीतकोविदैः ॥ ११ ॥

आभोगध्रुवयोरन्तरतरो*[5] धातुरस्ति यः[6] ।
छायालगान्तरे सोऽत्र रूपकेषूपवर्णितः[7] ॥ १२ ॥

[8]ओव्यादीनि* तु यान्यत्र रूपकाणि न्यरूपकन्[9] ।
केचिन्न तेषु कर्त्तव्य आभोगः कर्हिचिद्बुधैः ॥ १३ ॥

अत्र यन्मानमाख्यातं तालज्ञैस्तालकर्मणि ।
विश्रा[न्ति]युक्तया काले क्रियया तदिहेष्यते ॥ १४ ॥

धात्वादिवादनं मत्तकोकिलायां यदीरितम्[10] ।
तदेकतन्त्रीमुख्यासु वीणासु स्याद्यथायथम् ॥ १५ ॥*[२१A]

यदेकतन्त्र्यामुद्दिष्टं नकुलादिषु तत् स्मृतम् ।
वेणुप्रवीणा वीणास्थं वेणुष्वतिदिशन्ति तत् ॥ १६ ॥

---

प्रतिस्थित पाठ— ७. *द्विकुले । १०. *स्याता । ११. *वसुकृता । १२. *०ध्रुवयोरन्तर-तरंतरो । १३. *तुद्यादीनि तु ।

---

1. B. ०श्रित्तो । 2. A. B. दक्षिणपथाश्रिताः । 3. P. रूपकेन(ण) । 4. P. प्रयोक्तव्य । 5. P. ०ध्रुवयोरन्तरतु(त)रो । 6. P. धातुरस्त्रि(स्ति)यः 7. P. रूपकेपू-(षू)पर्वणितः । 8. B. अव्यादिनी तु यान्यत्र । K. अव्ययादीनि । 9. P. न्यरूपपन् । 10. B. तदीरितम् ।

आहुरेकमानतालयुक्तं ताभ्यां[1] विवर्जितम् ।
वीणावाद्यं कश्चिदाह मानेनैतद्विना कृतम् ॥ १७ ॥

लीलाकृते[2] ध्रुवातालयुगं स्यात् स्वेच्छया कृतम् ।
अस्य लक्ष्यप्रधानत्वाद्[3] व्याख्या लक्षानुसारिणी ॥ १८ ॥

कर्त्तव्या लक्षतत्त्वज्ञैर्लक्ष्ये[4] तत्त्वविरोधिनी[5] ।
ग्रहादिनियमो [6]द्रष्टानुरोधाच्छास्त्रगोचरः[6] ॥ १९ ॥

लक्ष्येऽन्यस्वरसंदर्भो नान्यथात्वमिहार्हति ।
स्वस्थानानां चतुष्केण स्वरैः स्वस्थानसंभवैः ॥ २० ॥

वेणावपि च वीणावद्रागोत्पत्तिरिहोच्यते[7] ।
लक्षणेन* विरुध्येत[8] यत्र रागस्तु तत्र हि ॥ २१ ॥

लक्षणस्थं द्वितीयादि ग्रहापेक्षं[9] प्रकल्पयेत् ।
किन्तु ग्रहादयो[10] ये स्युः स्वरा लक्ष्मणि तावताम् ।
यथासम्भवमेव[11] स्यात् स्थायी रागो स्वरोऽपि च *[12] ॥ २२ ॥

पात्रं रंगं प्रविश्य प्रथमत उदितं[13] चातुरस्यं सुरेखं
देहे धृत्वाऽङ्घ्रियुग्मं सममथ लतया लक्षितं पाणियुग्मम् ।
कृत्वा वामं हृदिस्थं करमपि ललितं प्रायशो ने[२१B]त्रपात्रं[14]
लक्ष्यं[15] साक्षात्तु तत्तच्चरणमनुगतं नर्त्तनं प्रारभेत ॥ २३ ॥

एकैकं करणं विशिष्य कलया[16] कार्यं गुरुप्रायया
पार्थक्येन तदङ्गहारनिवहेष्वाद्यं हि शेषाण्यतः ।
न्यूनत्वं* करणस्य नाप्यधिकता दोषाय तेषु स्फुटं
लक्ष्मस्थं[17] यदसूत्रयन्[18] स्वयमयं वा शब्दमृष्यग्रणीः ॥ २४ ॥

---

प्रतिस्थित पाठ— २१. *लक्ष्यणेन । २२. *स्वरोत्रि च । २४. *न्यून्यत्वं ।

---

1. P. द्वाभ्यां । 2. P. लीलाकृत० । 3. P. लक्ष(क्ष्य)प्रधानत्वाद् । 4. A. में रेफ नहीं है । 5. P. लक्ष्म(1)विरोधिनी । 6-6. दृष्टोऽनुरोधा० । 7. P. ०रिहोदिता । 8. P. निरुध्येत । 9. P. ग्रहापेक्ष्यं । 10. A. ग्रहादयो । 11. B. यथासंभमेव । 12. P. रागेश्वरोऽत्र च; B. रोगेश्वरो । 13. P. उचितं । 14. P. नेत्रपात्र- । K. नेत्रपत्रे । 15. P. दक्षः; K. दक्षं । 16. P. विशिष्टकलया । 17. B. लक्ष्म्यस्थं । 18. P. यदसूत्रयत् ।

लीनं तत् समनन्तरं समनखं[1] कृत्वा ततो व्यंसितं
[2]पाणी चात्र[2]* तु विच्युतौ विरचयन्नालीढकं संश्रयेत् ।
प्रत्यालीढकसन्निवेशविधिनोज्झित्वा तदालीढकं*
कार्यं सर्वमशेषमाश्रितमिदं[3]* सर्वाङ्गहारेष्वपि ॥ २५ ॥

चार्यो युद्धनियुद्धयोर्निगदिता* वृत्तिस्थिता भारती[4]
नाट्यादित्रितये गतौ च ललितैरङ्गैः प्रयोज्याश्च ताः ।
मुख्यो यः करपादयोस्तदनुगो यः[5] स्यात् स चाग्रेसर-
स्तत्र स्यात् समकालता तदुभयोः प्राधान्यसाम्ये सति ॥ २६ ॥

अथवा—

मुख्यत्वं यदि हस्तकस्य चरणस्य स्यात्तदा सोऽग्रगो-
ऽन्यस्य स्यादनुगामिता तु[6] समकालत्वं द्वयोः साम्यतः ।
यत्र स्याच्चरणः करस्तदनुगो हस्तस्ततः स्या[२२A]त् त्रिकं
ह्यङ्गोपाङ्गनयस्तदा[7] चरणयोः स्यात् किङ्करत्वाग्रणीः ॥ २७ ॥

इत्यङ्गस्य नियोजनं चरणयोः प्राधान्यमाभाषितं[8]
प्राधान्ये करयोस्तदादिगदितं[9] तज्ज्ञैः पदाद्यङ्गकम् ।
[10]चारं चारमुपाश्रयश्च पदयोः[10] पृथ्वी यथा स्यात्तथा
कारं कारमपूर्वहृत्करयुगं[11] कट्यां [12]भजेत स्थितिम्[12] ॥ २८ ॥*

अर्द्धेन्दुः[13] स्वललाटके सदितरः[14] सत्पक्षप्रद्योतको
भूत्वा[15] संश्रयते कटीमथ यथाशोभं* तु हस्तान्तरम् ।
तत्र[16] भ्रूवदनास्यरागपवनाद्योपाङ्गकोल्लासिताः
प्रत्यङ्गैरुपबृंहिता [17]अनुसरं स्युर्नर्त्तने हस्तकाः[17] ॥ २९ ॥

---

प्रतिस्थित पाठ— २५. *पाणीपा चात्र । *तदालीढक त । *सर्वमशेषमाश्रित इदं
२६. *युद्धनियुद्धयो निगदिता । २८. *पद्य सं. २८ नहीं है । २९.
*यथाशोतं ।

---

1. P. सममखं । 2-2. P. पाणी चात्र तु । 3. P. सर्वमशेषमादित इदं । 4. P. वृत्ति(त्ति)श्रिता भारती । 5. P. ०ऽन्यः । 6. P. ०नुगामितानु० । 7. P. ह्यङ्गोपाङ्गवय(?)स्तदा । 8. P. प्राधान्य आभासितं । 9. A. B. करयोलस्तादि० । 10-10. P चारमुपाश्रयश्चरणयो(:) । B. वारंवार० । 11. P. कारं कारमपूर्ववत्० । 12. P. भवेत्तत्स्थितिम् । A. भवेत् स्थितिम् । B. भवेत स्थितिम् । BO. भजेत्तत् स्थितिम् । 13. A. B. अर्धेंदुः । 14. P. स च नाटके स च भवन् । 15. P. नृत्ते । 16. P. नेत्र । 17-17. P. इह कराः कार्या रसव्यञ्जकाः । B. इति ।

पात्रैरुत्तममध्यमैः सललिताः सुव्यक्तलक्ष्मान्विता
योज्या:[1] सौष्ठवसंयुतास्तदितरैस्तद्वैपरीत्यान्विताः ।
भालक्षेत्रगताः* सदा सदभिनेये* वक्षसः क्षेत्रगा —
स्ते*स्युर्मध्यमकेऽधमे त्वधरगा नेयं[2] व्यवस्था नटे ॥ ३० ॥
श्रेष्ठैः[3] सन्निहिता न दूरकलिता मध्येऽधमे दूरगाः
प्रत्यक्षादिषु तत् प्रचार उचितः स्यादल्पताद्यञ्चितः ।
भीतव्याकुलतन्द्रिमूर्च्छितविषण्णग्लानवृद्धज्वरि—
[4]*क्षुच्छीतार्त्तशयालुतापप्रमदोन्मत्तप्रमत्तादिषु*[4] ॥
नो हस्ताभिनयः प्रयोक्तुमुचितः स्यात् कर्कटादिं विना
यस्मात्ते पुरुषस्य भावमखिलं संसूचयन्त्यान्तरम्* ॥ ३१ ॥
सामस्त्यव्यासयोगैः करकरणमिलद्बाहुसंयोजनैर्या
जायन्तेऽसङ्ख्यरूपाः[5] क्रमत इह रसोल्लासवैचित्र्यतश्च* ।
आवर्त्यावर्त्तनास्ता[6] रसमनुरुचिरास्तेन[7] लास्यानुरूपा
याभिर्नृत्यप्रपञ्चस्त्वभिनयचतुराः पाण्योऽनेकशः[8] स्युः ॥ ३२ ॥
रेखाया [9]अनतिक्रमात् सुनिपुणं[9] नानाविभङ्गि[10]स्फुरत्—
तत्तद्भावजवर्त्तनाविचलिताः शोभाभृतो बाहवः ।
रच्यन्ते यदि चालना[11] नियमितास्तज्ज्ञैस्तदा[12]ते पुनः
[13]शर्वाणीभरणानुरागरसिक*श्रीकुम्भभूमीभृता[13] ॥ ३३ ॥
ओव्यादिगोणी[14][मलपं]*पदं* स[15]
छायालगस्थध्रु[वकान्त्यसंस्थाः]* ।

---

प्रतिस्थित पाठ—३०. *लाभक्षेत्रगताः । *सदभिनये ये । *ते । ३१. *-*क्षुच्छीतार्त्तशयालुतापप्रमत्तोन्मत्तमत्तादिषु । *संसूचयत्यान्तरं । ३२. *०विचित्र्यतश्च । ३३. *०रसिकः । ३४. *तीन वर्णों का स्थान रिक्त है । *यद । *पांच वर्णों का स्थान रिक्त है ।

---

1. P. योज्या(:) । 2. P. ०त्वधरगाश्चेयं । 3. P. श्रेष्ठे । B. श्रेष्ठेन । 4-4. P. क्षुत्क्षान्तार्तशयालुतापसजनोन्मत्तप्रमत्तादिषु । BO. क्षुत्क्षीतार्त०; A. B. क्षुत्क्षान्तार्तशयालुतापसप्रमत्तोन्मत्तमत्तादिषु । 5. P. जायन्ते सख्यरूपाः ।; K; BO. जायन्तेऽसंख्यरूपाः । 6. P. आवर्त्तावर्त्तनास्ता । 7. P. स्वेन । 8. P. याभिनृ(नृं)त्यप्रपञ्चेष्वभिनयचतुराः । 9. P. अनतिक्रमास्तु । 10. B. नानाविभंगि । 11. P. चालका । 12. P. निगदितास्तज्ज्ञैस्तदा । 13-13. P. शर्वाणीचरणानुरागरसिकश्रीकालजिद् भूभृता । 14. P. ओन्तारिगोणी० । BO. ओव्यादिगोणी० । 15. P. च ।

हृदि प्रपूर्वा च तदन्त्यखण्डे-
ऽप्यवत्सकस्यापि* तथान्त्यखण्डे ॥ ३४ ॥

एलादिगामि[गजरोपश]*मान्त्यखण्डे*
वाद्याश्रिते तु तुडुके[1]ऽप्यखिलप्रबन्धे* ।
प्राय: प्रयोगमुपयान्ति भुजप्रपाता:[2]
[ना]*न्य[त्र]*ते च कविते[3] सुतरां प्रशस्ता: ॥ ३५ ॥

चित्रकूटैकदेशस्थो[4] यो[5] देशा[२३A]नखिलानपि ।
शास्ति तेन तथा भूता परिभाषाऽत्र भाषिता ॥ ३६ ॥

यो मूर्ध्नि द्विषतां पदं प्रतिपदं धत्ते पदं स्वं गुणै:
स्फीतैरुन्नमयन् पदार्थमपि यत् संवर्त्तनोल्लङ्घयन्[6] ।
तेनात्रैकपदे पदे धृतवता कुम्भेन[7] राज्ञा हृदा
शर्वाण्या: पदबन्धहेतुकपदोल्लास: पदि स्थापित: ॥ ३७ ॥

[8]इति श्रीराजाधिराज श्री कु० परिभाषा नाम चतुर्थं परीक्षणं परिपूर्णं पदोल्लासश्च समाप्त: ।[8]

---

प्रतिस्थित पाठ— ३४. *०कस्त्यापि । ३५. *पांच वर्णों का स्थान रिक्त । * चान्त्य-खण्डे । *३६ का अंक बीच ही में पुन: दोहराया गया है । *एक वर्ण का स्थान छोड़ा गया है । *एक वर्णन का स्थान रिक्त है ।

---

1. P. तुडक्के । 2. P. भुजा: समस्ता । BO. भुजप्रपाता । 3. P. कविते(?) । 4. P. ब्रह्मशैलैकदेशस्थो । 5. B. ये । 6. P. स्वं वर्त्मनोल्लङ्घयेत् । 7. P. कामेन । 8-8. P. इति श्रीजगदीश(श्व)रवनदेवनिजगणेन जगदीश्वरी[१]कामेश्वरीचरणकिङ्करेण श्रीकामाक्षा[२]गिरिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुर-ग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्त्तिपूरपराजिताचलनायकेन[३] गं(सं)गमतीर-दुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण दमनपुरविध्वंसनवन्दीकृतयवनीनिचयेन सहिषमेरुजया-जेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिशिखरपरिवारिता[४]–ञ्जनगिरिविजयविख्यातवीर्यगर्वेण सहदस्वमातृकापुरोद्-धूलनधर्षिता(त)महोरगपुरेण श्रीवनदेवस्वामिप्रसादरचनापर[५]–परमेश्वरेण [६]त्र्यम्बकेश्वर-सन्निधिकीर्त्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभीमस्वर्गतायथार्थीकरणरचितचारुपथेन

( चालू)

---

१. K. जगदम्बिकाकामाक्षी । २. K. कामेश्वरी । ३. K. बलनायकेन । ४. K. परिवारिताञ्जनादिगिरि etc. । ५. K. में 'पर' नहीं । ६. K. त्र्यम्बकेश्वर० ।

[1]श्रीकामाक्षागिरिनवीननिर्मितपराजितसुमेरुणा श्रीमहिषाचलोपरि श्रीहरिशरणविरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्याक्षेत्रसमुद्रसम्भवरोहिणीरमणेन परमभागवतेन महाराजाधिराजश्रीराजमानमृगाङ्कतामराजनन्दनेन महाराज्ञीश्री–[2]सौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन[3] सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंसमहाराज्ञीश्रीकर्मवती[4]–लघुमादेवीहृदयाधिनायेन इति[5] राजाधिराजश्रीकालसेनविरचिते[6] संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे पदोल्लासे परिभाषापरीक्षणं चतुर्थं समाप्तम् ॥

( पदोल्लासश्च समाप्तिमगात् )



१. B. श्रीकामाक्षी० । २. A. में 'श्री' नहीं । ३. K. हृदयानन्दनेन । ४. K. में 'श्री' और है । ५. K. में 'इति' नहीं । ६. K. के मत से 'कालसेनेन विरचित' पाठ श्रेष्ठ है ।

## ३. छन्द उल्लास-अनुष्टुब् नाम प्रथम् परीक्षण

छन्दानुवृत्तिकारीणि[1] यस्य छन्दांसि जाग्रति ।
तमच्छन्दकृतं[2] वन्दे स्वच्छन्दं[3] गिरिजापतिम् ॥ १ ॥

समासेन प्रबन्धानां मूलभूतानि कानिचित् ।
तत् प्रयोगोपयोगीति[4] छन्दांसि व्याहरामहे ॥ २ ॥

मयरसतजभनसंज्ञाः कथिता अष्टौ गणाः क्रमेणैते ।
विज्ञेया वर्णभावाः[5] प्रस्तारे ते त्रिकाः सर्वे ॥ ३ ॥

सर्वगुरादिल उक्तो मध्यलघुः स्यात् तथान्त्यगुरुलघुकौ ।
मध्यगुरादिगुरन्यौ सर्वलघुः स्यात् तथैवान्त्यः ॥ ४ ॥

पृथ्व्यम्बुवह्निमरुदम्बरसूर्यचन्द्र–
नाकाधिदैवतयुता मगणादयोऽमी ।
श्रीवृद्धिमृ[२३B]त्युपरदेशफलानवाप्ति[6]—
रुक्कीर्त्तिसौख्यफलदा मुनिभिः प्रदिष्टाः* ॥ ४ ॥

दतचपषा मात्राख्या* द्वित्रि[7]चतुःपञ्चषट्कलाः*[8]क्रमशः ।
[9]द्वित्रिशरशैलविश्वा*[9]भेदास्तेषामिमे गदिताः ॥ ५ ॥

उक्तात्युक्ता तथा[10] मध्या प्रतिष्ठातिप्रतिष्ठिका ।
गायत्र्युष्णिगनुष्टुप् च[11] बृहती पंक्तिरित्यपि ॥ ६ ॥

त्रिष्टुव्[12] जगती चातिजगती[च] शक्वरीति च ।
सैवातिपूर्वाष्टयत्यष्टी धृतिश्चातिधृतिस्तथा ॥ ७ ॥

---

प्रतिस्थित पाठ— ४. *प्रदिष्टां । ५. *'मात्राख्या' के आगे 'द्वित्राख्या' अधिक पाठ है ।
*कला । *द्विद्विशरशैलविश्वा ।

---

1. P. छन्दानुवृत्तकारीणि । 2. P. तम(च्)छन्दकृतं । 3. B. स्वं छन्दं । 4. P. प्रयोगोपयोगीनि । 5. BO. वर्णभवाः । 6. B. मृत्युरपदेश० । 7 B. द्वित्रिः । 8. B. कला । 9-9. P. द्वित्रिवेदशररस० । B. रसशर । 'द त च प ष' के (द) द्विकल के (द्वि) दो, त (त्रिकल) के (त्रि) तीन, (च) चतुष्कल के (शर) पांच, (प) (पंचकल) के के (शैल) आठ और (ष) षट्कल के (विश्व) तेरह प्रस्तार भेद होते हैं । 10. B. में 'तथा' नहीं है । 11. B. में 'च' नहीं है । 12. P. त्रिष्टूप् च । B. में 'च' नहीं है ।

कृतिश्च प्रकृतिश्चैवाकृतिर्विकृतिरेव च ।
संकृत्यभिकृती चैवोत्कृति[1]च्छन्दांसि नामतः ॥ ८ ॥
आरभ्यैकाक्षरात् [पादात्] षड्विंशत्यक्षरावधि[2] ।
पादैः क्रमादिमानि* स्युर्मालावृत्तमतः[3] परम् ॥ ९ ॥
एकमात्रो* ऋजुर्ह्रस्वो[4] लघुर्ज्ञेयो[5] गुरुः पुनः ।
वक्रो[6] दीर्घो विसर्गान्तः[7] सानुस्वारो द्विमात्रिकः ॥ १० ॥
अंह्र्यादिसंयुते*[8] वर्णे व्यञ्जने चाग्रगे लघुः ।
पादान्ते वा लघोर्गत्वं वंशस्थादिषु नो पुनः ॥ ११ ॥
पदान्तेऽत्र [9]यतिः कार्या[9] लुप्तालुप्तविभक्तिके ।
अयादिकाक्षरविच्छिन्ने[10] पदान्ते च तथावि[२४A]धे ॥ १२ ॥
नार्द्धे समाससन्धी* स्तो *यतिर्विच्छेदसंज्ञिका ।
औचित्यादत्र[11] विज्ञेया यतिः श्रुतिसुखा बुधैः ॥ १३ ॥
यतो मधुरता श्लाघ्या भारत्यां[12] भरतादिभिः[13] ॥ १४ ॥
अविशेषे* तुरीयांशश्छन्दसः पाद इष्यते ।
द्विपदाद्यौ द्वितायांशादिकः पादो यतः स्मृतः ॥ १५ ॥
उक्ता गः श्री, अत्युक्ता[14] गौर्दृष्टा* सा स्त्री, मो मध्यायाम् ।
नारी,[15] शंभाः पातु त्वां सा कन्या मगौ प्रतिष्ठायां* स्यात् ॥ १६ ॥

यथा—

सेयं कन्या गौरी पायात्, शंभोर्या[16] शेते हृत्पद्मे ॥ १७ ॥

अत्युक्ताया रतिगणा भेदा मध्याभवास्तथा ।
कामस्य तु प्रतिष्ठाया भेदा बाणगता[17] मताः* ।
अत्युक्तायां[18] लपूर्वा ये* तेष्वादावधिको लघुः ॥ १८ ॥

---

प्रतिस्थित पाठ— ९. *क्रमाविनामानि । १०. *एकमात्र । ११. *अह्लादि संयुते । १३. *समासंधी । *०तिर्विछेवसंज्ञिका । १५. अविशेष । १६. *गौ दृष्टा । *प्रतिष्टा । १८. *मता ।

---

1. P. चवोक्तानि । A. B. ०क्तति छंदांसि । K. चैवोक्तातिच्छन्दांसि । 2. P. ०क्षरावधिः । 3. P. स्युः माला० । 4. P एकमात्रो ऋजुह्न(र्ह्र)स्वो । B. एकमात्र० । 5. P. लघुज्ञे(र्ज्ञे)यो । 6. P. नैको । 7. P. विसर्गो(र्गा)न्तः । 8. B. अंघ्रादि । 9-9. P. युतः कार्यो । 10. P. आदिकाक्षर० । A. ०विछिन्ने । 11. P. ओचित्यदेऽत्र । A. ऊ चित्यदे । 12. P. भारत्या । 13. P. में यहां पद्यसंख्या १४ दी है । 14. A. B. श्री अत्युक्ता । 15. A. में 'नारी' द्वितीय चरण में है । 16. P. पायाच्छम्भोर्या, A. पायात् शंभोर्या··· । 17. A. बाणगणा । 18. P. अत्युक्ताया ।

समासमविभेदेन द्विधानुष्टुबिहोच्यते[1] ।
चित्रपदा भभगा गः*, उक्ता विद्युन्माला मो गौ ॥ १९ ॥
जरौ लगौ प्रमाणिका नाराचमत्र तलगाः ।
[अनुष्टुब् न सनावाद्याद्वक्त्रं ये तुर्यतोऽभीष्टम् ।]*
अनुष्टुबसमावाद्याद्वक्त्रं ये तुर्यतोऽभीष्टम् ॥ २० ॥
पथ्यावक्त्रं समुद्दिष्टं तुर्याज्जे युग्मपादयोः ।
तुर्या दो जे नतभरमसैर्नविपुलादयः[2] ।
प्राय[२४B]स्तुर्यो गस्तास्वोजे युजि षड्भ्यो लघुः सदा ॥ २१ ॥[3]
पञ्चवक्त्रप्रसादाप्तसाम्राज्येन महीभृता ।
[3]कुम्भेन वक्त्रवृत्ताद्यमनुष्टुप्परिकीर्तितम्*[3] ॥ २२ ॥

[4]इति श्रीराजाधिराज कुं० छंद उल्लासेऽनुष्टुब्परीक्षणं प्रथमं समाप्तम् ।[4]

---

प्रतिस्थित पाठ— १९. *त्रिपदा भभभाग । २०. *यह पंक्ति दो बार लिखी गई है । २२. *परिकीर्तिता ।

---

1. B. द्विधा अनुष्टुप्...। 2. P. नतं-भरम(?)सैनं० ।; B. नतरभ...। (नविपुलादि भेद यथा—नविपुला, तविपुला, भविपुला, इत्यादि) । 3. P. कालसेनेन वृत्ताद्यमनुष्टुप् परिकीर्तितम् ॥ २२ ॥ 4-4. P. इति श्रीराजाधिराजमहीमहेन्द्रश्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे छन्द उल्लासे अनुष्टुप्परीक्षणं प्रथमं समाप्तम् ॥

## वृत्त नाम द्वितीय परीक्षण

अज्ञातवृत्तं ब्रह्माद्यैः [1]श्रितं वृत्तं[1] महात्मनाम् ।
परिज्ञातजगद्वृत्तं सद्वृत्तं तं[2] भजे शिवम्[3] ॥ १ ॥

अथ वृत्तं प्रकीर्त्यते—

तद्द्विधा* वर्णमात्राभ्यां पद्यं चैव चतुष्पदी ।
समैः पादैः समं वृत्तं द्वाभ्यामर्द्धसमं स्मृतम् ।
उक्ताभ्यां विपरीतं यत्तद्वृत्तं विषमं स्मृतम् ॥ २ ॥

[ ९ अक्षर ]

भद्रिका भवति[रो] नरौ । [१]

[ १० अक्षर ]

उक्ता मत्ता मभसगयुक्ता । [२]

[ ११ अक्षर ]

स्यादिन्द्रवज्रा[4] ततजा गुरू चेत् [३]
उपेन्द्रवज्रा जत[5]जा गयुग्मम् । [४]
रो नरौ* लघुगुरू[6] रथोद्धता । [५]
स्वागता तु रनभाद्गुरुयुग्मम्[7] । [६]
वेदैश्छिन्ना[8] शालिनी मात्तौ गौ[9] । [७]
दोधकमुक्तमिदं भभभा गौ[10] ॥ [८]

[ १२ अक्षर ]

ख्यातेन्द्रवंशा ततजै रसंयुतैः । [९]
वदन्ति वंशस्थमिदं जतौ जरौ । [१०]
जरद्वयं वदन्ति पञ्चचामरम् ॥ [११]
द्रुतविलम्बितमत्र[11] नभौ भरौ । [१२]
इह तोटकमम्बुधिसैः प्रथितम् । [१३]

---

प्रतिस्थित पाठ-- २. *तद्विधा [५] *मरौ ।

---

1-1. P. श्रुतवृत्तं । 2. P. (तं) । 3. P. छि(शि)वम् । 4. A. स्यादिन्दवज्रा । 5. P. त(ज)तजा गयुग्मम् । 6. B. गुरुलघू । 7. P. रनभा गुरुयुग्मं । 8. P. वेदै छिन्ना । 9. A. B. गैः । 10. A. B. गैः । 11. A. दृत० ; B. द्रत० ।

गणैर्यैश्च[२५A]तुर्भिर्भुजङ्गप्रयातम् । [१४]
सम्मता[1] स्रग्विणी रैश्चतुर्भिर्युता[1] । [१५]

[ १३ अक्षर ]

त्रिच्छेदा*[2] मनजरगैः प्रहर्षिणीयम्[3] । [१६]

[ १४ अक्षर ]

ख्याता वसन्ततिलका तभजा जगौ गः[4] । [१७]

[ १५ अक्षर ]

वसुयतिरियमुक्ता मालिनी नौ मयौ* यः । [१८]

[ १६ अक्षर ]

भ्रौ ननना* गुरुश्च वृषभगजविलसितम्[5] । [१९]

[ १७ अक्षर ]

[6]गुहास्यैर्विश्रान्तिर्यमनसभला गः[6] शिखरिणी । [२०]

[ १८ अक्षर ]

नसमतभरा वेदैर्यैः[7] षड्भिश्चेद्यतिर्हरिणोपदम् । [२१]
यतौ न्यौ यः सोऽत्र*[8] मुनिभिरियं चित्रलेखा गदिता । [२२]

[ १९ अक्षर ]

आदित्यैर्यदि*मः सजौ सततगाः शार्दूलविक्रीडितम्[9] । [२३]

[ २० अक्षर ]

अश्वैश्छिन्ना सुगीता मरभनयभला* गान्तः[10] सुवदना । [२४]

[ २१ अक्षर ]

विख्याता स्रग्धरेयं मरभनययया सप्तकाश्वैर्यतिश्चेत्* । [२५]

---

प्रतिस्थित पाठ— [१६] *त्रिछेदा । [१८] मयो । [१९] *भौ ननभा । [२२] *यतो न्यौ जस्तत्र । [२३] यति । [२४] *मरभनयतला । [२५] सप्तः काश्वैर्यतिश्चेत् ।

---

1. A. B. समंता । 2. A. त्रिछेदा । 3. B. प्रहर्षणीयं । 4. P. भ(त)भजा जगौ गः । 5. P. वृषभुजगविलसितम् । 6-6. P. गुहास्यैवि(वि)श्रान्तिर्यमनसभला गः । 7. P. तुर्यैः । 8. P. यतौ न्यो(न्यौ)यः सोऽत्र । 9. A. शाद्दूल० । 10. P. गाङ्कः ।

[ २२ अक्षर ]

पंक्तिर्यतौ* भरौ नरनरा नगौ[1] भवति मद्रकं[2] सुललितम् । [२६]

[ २३ अक्षर ]

रो नरौ नरनरा लगाविह भवन्ति चेद्भवति चित्रकं तदा । [२७]

[ २४ अक्षर ]

ननभनजननाश्च यगणसहिता मुनियतिललिततलतेयम्[3] । [२८]

[ २५ अक्षर ]

[4]उक्तेति रतौ तो यो*[4]भभना ननन[5]गुरु किल हरिणशिशुनयना । [२९]

[ २६ अक्षर ]

अत्राष्टाभी रुद्रैश्छिन्नं ममतनननरसलघुगा*[२५B] भुजङ्गविजृम्भितम् । [३०]

अथवा—

[6] नजनसभा नननगणलवक्रा इति यति भवति [च] सततगतिः[6] । [३१]

इति वा ॥

अथ दण्डकाः

शेषजात्यादिकं मुक्त्वा षड्विंशत्यक्षराधिकम्* ।
यत्किञ्चिद्दृश्यते छन्द*स्तत् सर्वं दण्डकं विदुः ।
नद्वयं[7] रगणाः सप्त चण्डवृष्टिरुदाहृतः[8] ॥ ३ ॥
अथार्णार्णवव्याल[9]जीमूतलीला—
करोद्दाम[10]-शङ्खादयः स्युः प्रबन्धाः ।
परं चोत्तरेणोत्तरेणैककेन
प्रवृद्धाश्च ते रेण विद्वद्भिरूह्याः ॥ ४ ॥

---

प्रतिस्थित पाठ— [२६] *पंक्ति यतौ । [२९] *० तायो । [३०] *ममतनननरयलघुणा ।
३. *षट्त्रिंशत्यक्षराधिकम् । *छंद तत् ।

---

1. P. मगौ । 2. B. मंद्रक । 3. B. मुनियतिललितेयम् । 4-4. P. पङ्क्त्या विरतौ तो यो । 5. B. में एक 'न' नहीं है । 6-6. P. न ज न स(न)भा नननगणलच-(ग)का इति वसति भवति सततगतिः । 7. K. तद्वयं । 8. P. चण्डवृद्धिरुदाहृता । 9. A. B. ० व्याज । 10. A. करोब्दाम । B. करोद्दाम ।

*[एवं मालादिवृत्तानि भवन्त्यन्यान्यनेकशः ।
यथेष्टं रचितानेकशुभनामान्यनुक्रमात् ॥ ५ ॥
चरणो यावदेकोनसहस्राक्षरनिर्मितः ।
मालावृत्तानि तावत् स्युरित्यादिष्टं महीभृता ॥ ६ ॥
अथवा वर्णयुग्वृद्ध[1]-सहस्राक्षरनिर्मितः ।
पादो भवति तावत् स्युर्यथेष्टमिह दर्शनात् ॥ ७ ॥]*
तथाष्टादिभी रैः पदैर्नाद्गुरोः स्युः
परं पन्नगाद्याः प्रबन्धाः परेऽपि ।
ते च दम्भोलि-हेलावली-मालती–
केलि-कङ्केलि[2]-लीलाविलासादयः* ॥ ८ ॥
यथेष्टं रगणैः प्रोक्तो लघुपञ्चकतः* परैः ।
चण्डकालोऽथ यैः सिंहविक्रान्तो लघुपञ्चकात् ॥ ९ ॥
ल-षट्काद्गत्रयाच्चापि[3] यथेष्टं यगणैः परैः ।
मेघमालादण्डकोऽयं प्रबन्धः सम्मतः सताम् ॥ १० ॥
स्वेच्छया रगणैः प्रोक्तो* मत्तमातङ्गसंज्ञकः ।
कुसुमास्तरणस्तद्वद्यथेष्टं [सगणै]रिह ॥ ११ ॥[4]
सिंहविक्रीडको नाम स्वेच्छया यैः प्रयोजितैः ।
निरन्तरं लघुगुरू यत्र सोऽनङ्ग[२६]शेखरः[5] ॥ १२ ॥
प्रयुज्येते[6] गुरुलघू साऽशोकपुष्पमञ्जरी[7] ।
यथेष्टं तगणाश्चान्ते[8] गद्वयं कामबाणकः ॥ १३ ॥
यथेष्टा भगणा* गौ च स्याद् भुजङ्गविलासकः ।
नद्वयात् स्वेच्छया पञ्चमात्रैरुत्कलिका* मता ।

---

प्रतिस्थित पाठ— ५-७. *-*कोष्ठगत अंश प्रति में नहीं है; P. प्रति में है । ८. *लीलासादय । ९. *लघुपंचकतः । ११. *प्रोक्ते । १४. *यथेष्टास्तगणा । *पञ्चमैरुत्कलिता ।

---

1. B. ०युद्ध । 2. P. कङ्कोलि । 3. P, ल ख(ष)ट्काद् गत्रयाच्चापि । 4. B. में यह पद्य नहीं है । 5. P. ०शेष(ख)रः । 6. P. प्रयुज्यते । 7. P. साशोकपुष्पमञ्जरी । 8. P. नगणाश्चान्ते ।

एकैकगणवृद्ध्या स्युरेवमेते ह्यनेकधा ।। । १४ ।।
श्रुतेन यस्य वृत्तेन पवित्रीक्रियते जगत् ।
तेन श्रीकुम्भकर्णेन[1] वृत्तमत्रोपवर्णितम्[2] ।। १५ ।।

[3]इति श्रीमहाराजाधिराज श्री कुं० छन्द उल्लासे वृत्तशासनं परीक्षणं नाम द्वितीयं समाप्तम् ।।[3]



1. P. श्रीकालसेनेन । 2. A. B. वृत्तमात्रोपवर्णितम् । 3-3. P. इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे पाठ्यरत्नकोशे छन्द उल्लासे वृत्तपरीक्षणं नाम द्वितीयं समाप्तम् ।।

# आर्यविलोकन नाम तृतीय परीक्षण

सुरासुरैर्नमस्कार्या*[1] स्वकार्यापेक्षयैव या ।
योगिभिश्च हृदा धार्या तामार्यामहमाश्रये ॥ १ ॥
प्रथमेऽर्द्धे जः षष्ठे न्लो*[2] वा गः सप्तमो* न विषमे जः ।
अपरेऽर्द्धे लः षष्ठे[3] लक्ष्मेदं* नियतमार्यायाः ॥ २ ॥
पूर्वार्द्धे षष्ठे न्ले नल्ले[4] पूर्वे यतिरिह मुनिगणगे ।
तस्मिन् षष्ठप्रान्ते यतिरुदिता मुनिभिरिह मुख्यैः ॥ ३ ॥
अपरार्द्धे पञ्चमके न्ले सति सोक्ता चतुर्थगणनिधने ।
[5]श्रीकुम्भकर्णनृपतियुक्तमिह[5] वदति तामार्याम् ॥ ४ ॥
यस्यामर्द्धद्वितये[6][२६B]भवति यतिश्च त्रयेऽत्र सा पथ्या ॥ ५ ॥
पूर्वार्द्धे मुख्यचपला[7] च-त्रययतिविरहिता सदा-वि[हिता*[8]]
[जघन]* विपुला परार्द्धे* च-त्रययतिविरहिता गदिता ॥ ६ ॥
[9]प्रोक्ताऽर्द्धयोर्द्वयोर्या यतिरहिता[9][च-त्र]*ये महाविपुला ।
शेषा विस्तररीत्या[10] भेदा नोक्ता महासुधिया[11] ॥ ७ ॥
जगणविहीना विषमे चत्वारः पञ्च युजि चतुर्मात्राः* ।
द्वौ षष्ठाविति चगणास्तद्घातात्[12] प्रथमदलसंख्या ॥ ८ ॥
एवमपरार्द्धसंख्या षष्ठे स्याल्लघुनि चैकस्मिन्[13] ।
[14]आर्यासंख्योभयदलसंख्याघाताद्विनिर्दिष्टा[14] ॥ ९ ॥[15]

---

प्रतिस्थित पाठ— १. नमस्कुर्या । २. *न्लो । *सप्त वा । *ल दों दं । ६. *दो अक्षरों का स्थान रिक्त । *तीन अक्षरों का स्थान रिक्त । *पलार्द्धे । ७. *दो अक्षरों का स्थान रिक्त । ८. *'चतुर्मात्रा' के पहले 'पञ्च' अधिक है ।

---

1. B. नमस्कारा । 2. P. षष्ठोन्लो । 3. P. षष्ठो । 4. P. तल्ले । 5. P. श्रीकालसेन । 6. B. यस्यामर्धे द्वितीये । 7. P. मुखचपला । 8. P. सदाभिमता । 9-9. P. द्वयोर्द्वयोर्या यतिरहिता । 10. P. विस्तरभीत्या । 11. P. मया सुधिया । 12. K. ० स्तद्यातात् [स्तद्योगात्] । 13. P. चैक एकस्मिन्; B. चेकस्मिन् । 14-14. P. आर्याऽसंख्योभय० । 15. वृत्तरत्नाकर की नारायणी टीका में श्लोक सं० ८ और ९ इस रूप में मिलते हैं—

जगणविहीना विषमे चत्वारः पञ्च युजि चतुर्मात्राः ।
षष्ठे द्वाविति चगणास्तथाऽङ्कतः प्रथमदलसङ्ख्या ॥
एवमपरार्द्धसंख्या षष्ठे स्याल्लघुनि चैकस्मिन् ।
आर्यासङ्ख्योभयदलसङ्ख्याघाताद्विनिर्दिष्टा ॥

अन्योन्यं प्रथमदले ताडनयाऽष्टौ शतानि जायन्ते ।
अर्कसहस्राण्येवं चरमेऽर्द्धेऽन्योन्यताडनया ॥ १० ॥

षट्साहस्री गदिता चतुःशती चाप्युभयदलविकल्पाः ।
अन्योऽन्यं ताडनया जायन्ते कोटयश्चाष्टौ ॥ ११ ॥

[1]लक्षाणामेकोना विंशतिरिह विंशतिः सहस्राणाम् ।
आर्याभेदा उक्ताः षष्ठे ले त्वे[क]एकस्मिन् ॥ १२ ॥

आर्यैवेयं गाथा प्राकृतभाषापथे विनिर्दिष्टा ।
गीतिविशेषानधुना शिवजायासेवको ब्रूते ॥ १३ ॥

द्विर्य[२७A]स्या आर्याया अभ्यासो जायते दले प्रथमे ।
सा तन्नाम्ना [गीतिः स्यादुप]*गीतिस्तथा[2] चरमे ॥ १४ ॥

दलयोरत्रोभययोः[3] स्यादुद्गीतिः कृते विपर्यासे ।
तत्तन्नाम्ना सर्वा जायन्ते भेदतो[4] ह्यमिताः ॥ १५ ॥

त्रिंशन्मात्रास्तु पूर्वार्द्धे विंशतिः सप्त चापरे* ।
सप्तपञ्चाशदुभयोर्मात्रा ज्ञेयास्तु योगतः ॥ १६ ॥

त्रिंशतो येऽधिका वर्णा द्विगुणास्ते त्रयाधिकाः ।
लघवस्तेऽत्र[5] विज्ञेयाः शेषास्तु गुरवो मताः ॥ १७ ॥

ऊनिता अथवा वर्णैर्मात्राः स्युर्गुरवोऽखिलाः ।
गुरुभिस्तूनिता वर्णा लघवः परिकीर्तिताः ॥ १८ ॥

वसन्तोत्सवबन्धः* स्यान्नवभिः पञ्चमात्रिकैः*[6] ।
द्विषष्टयन्ते[7] तथा गीतौ द्विभङ्गिः परिकीर्तितः ॥ १९ ॥

द्विपद्यन्ते[8]*तथा गीतिरन्ते मध्येऽवलम्बकम् ।
स त्रिभङ्गिर्द्विपदिका [9]दद्वयं चाथ दद्वयम्[9] ॥ २० ॥

---

प्रतिस्थित पाठ— १४. *पाँच वर्णों का स्थान रिक्त है । १६. *वापरे । १९ *वसन्तोत्सवः प्रबन्धः । *पंचमातृकैः । २० *द्विपद्यान्ते ।

---

1. B. लक्षाणामेनोना । 2. P. तदा । 3. P. दलयोरत्रोभयोः । 4. B. भेदितो । 5. B. लघवस्तत्र । 6. A. पंचमात्रकैः । B. पंचमातृकैः । 7. P. द्विपद्यन्ते । 8. P. द्विपद्यादौ । 9-9. P. दद्वयं चाप्यदद्वयं । K. तद्वदयं च पदद्वयम् ।

लघुद्वौ* चस्तथा दौ*[1] लास्त्रयः कर्पूरपूर्विका ।
तिथिच्छेदेऽरवचैर्नेऽन्त्ये द्विपदी* [2]विषमेऽपि* जे[2] ॥ २१ ॥

इति वा ।

[3]ललितौ विच्युतः[3]सप्त चगणैः स्युः परा अपि ।
लयोऽथ भ्रमरपदमुपपूर्वं तदेव हि ॥ २२ ॥
कुङ्कुमाङ्कसूडपदं[4] हरिणीपदमेव च ।
कमला[२७B]करं भ्रमररुतं स्याद्रत्नकण्ठिका* ॥ २३ ॥
कुङ्कुमतिलकावली कदलीपत्रमित्यपि ।
एवमाद्यैस्त्रिभिर्द्वाभ्यां योगे स्याद्वस्त्वनेकशः ॥ २४ ॥
चतुर्मात्र[द्व]यं पञ्चमात्रं[5] स्यात् खञ्जनामकः ।
षण्मात्रश्चतुर्मात्रस्त्रिमात्रश्चोपखञ्जकम् ॥ २५ ॥
षण्मात्रौ* द्वौ चतुर्मात्रौ* खञ्जिकाथावलम्बकः[6] ।
एते त्रयः पृथग्भेदास्त्रिभङ्गिः स्यात् परैरपि ॥ २६ ॥
त्रिभिर्मनोहरैश्छायाभिः[7] [8]स्वेच्छया ग्रथितैरपि[8] ।
चद्वयं लघुकान्तौ द्वौ तगणौ चगणद्वयम् ॥ २७ ॥
तगणश्चेदृशैः[9] पादैश्चतुर्भिर्वस्तुकं भवेत् ।
विषमे सप्त मात्राः स्युः समे यस्य त्रयोदश ॥ २८ ॥
स रासो विषमे पञ्चमात्रौ द्वौ च तथैकदः ।[10]
युग्मे च चत्रयं पञ्चपदा[11] मात्राभिरीरिता[12] ॥ २९ ॥
आसां तृतीयपादस्य प्राप्ते स्यात् पञ्चमेन तु ।
अन्ते तु दोहके वस्तु रड्डा[13]वा परिकीर्त्तिता ॥ ३० ॥

---

प्रतिस्थित पाठ— २१. *लघुदौं । *वस्तथादो । *कर्पूरपूर्विकाः । *द्विपदो *विषमेषि
२३. *रक्तकण्ठिका । २६. *षण्मात्रो *चतुर्मात्रे ।

---

1. P. लघुद्वौं च तथा दौ । 2-2. P. विषमे वि(ऽपि)जे । 3-3. P. यतिर्वैचित्र्यतः । 4. P. कुङ्कुमो गरुडपदं । 5. A. ०मात्र । 6. P. खञ्जिकाथावलम्बकम् । 7. P. A. B. ०छन्दोभिः । 8-8. P. स्वेच्छाग्रथितैरपि । 9. P. भगणः सदृशैः । 10. P. तथैकदा; A. तथैकदः; B. तथेकद । 11. P. पञ्चपदी । 12. P. मात्रादिरीरिता । 13. P. वस्तुरडा(?); A. 'डा' अक्षर स्पष्ट नहीं है ।

आद्यन्तयोश्च षण्मात्रे चत्रये मध्यगे सति ।
[1]*ओजेजो वस्तुवदनं समे जो न्लौ*[1] विकल्पतः ॥ ३० ॥
स्याद्रासावलयं [2]पूर्वमोजः षश्चषौ [पा]त्ततः[2] ।
षचतेभ्यः परे ते स्याद्वदनं* चोपपूर्वकम् ॥ ३१ ॥
षचचा[२८A]द्दौ वदनकं* यमिते तेऽडिलाः* स्मृताः ।
स्यादष्टषट्चतुःपाच्च धवलं तन्निरूप्यते ॥ ३२ ॥
[3]श्रीयशो गुणपूर्वं तत् क्रमादोजे तु चत्रयम्*[3] ।
दः समे[4] चौ श्रीधवलं तथाद्ये च तृतीयके ॥ ३३ ॥
तथाविधे द्वितीये[5] च तथा तुर्ये तु चत्रयम् ।
पञ्चमे सप्तमे द्वौ चौ तश्चैकः समयोः* पुनः ॥ ३४ ॥
चद्वयं दस्तथा चैकश्चत्रयं वा यशः परम् ।
धवलं तु षडंह्रौ[6] त्वाद्ये चतुर्थे तु[7] षद्वयम् ॥ ३५ ॥
द्वौ द्वितीये[7] पञ्चमे च[8] दौ षष्ठे* च तृतीयके ।
षद्वयार्धेऽथ[9] षे[10] कीर्तिधवलं चतुरंह्रिके ॥ ३६ ॥
षश्चौ* जे षचचाद्दस्तो वातः* स्याद्गुणपूर्वकम् ।
आद्ययोः षश्चत्रयं[11] च प्रत्येकं त्वन्त्ययोस्तथा ॥ ३७ ॥
पञ्च चाः सर्वपादेषु[12] चान्ते तो दोऽथ मङ्गलम्[12] ।
आदिस्ते वदनाद्ये* तु तदाद्यं धवलादिकम्[13] ॥ ३८ ॥

यदाह—

उत्साहहेलावदनाडिलाद्यैः*
संजायते[14]मङ्गलवाचि किञ्चित् ।

प्रतिस्थित पाठ— ३०. *नो जे जो वस्तुवदनं समे न्लो । ३१. *स्यावदनं । ३२. *वदकं । *विसर्ग नहीं है । *स्मृता । ३३. *चत्वयं । ३४. *तृतीये । *समयो । ३७. *पश्चौ । *वात । ३८. तोदनाद्ये । ३९. *वदनानिलाद्यै ।

1-1. P. समे जो वस्तुवदनमोजे जो न्लो । 2-2. P. पूर्वमोजश्च चषपौ (पा?) तत: B. मोजश्चषपौ । 3-3 P. K. श्रीयशसो गुणपूर्वं क्रमाद्दोजे तु चत्रयं ।; A. तत्क्रमादोजे । 4. P. दशमे; B. दसमे । 5. P. द्वितीये । 6. P. षड्गौ; A. षटद्गौ । 7. P. चतुर्थे (ऽपि) तु षद्वयम् । B. षट्द्वयम् । 7. B. द्वितीये तु पञ्चमे । 8. P. तु । 9. P. षद्व-याच्चेऽथ । 10. P. पे । 11. B. षचत्रयं । K. षत्रयं चश्च । 12-12. P. चात्ततो K. चात्तोदोऽथ तु मङ्गलम् । A. B. चांततो । 13. A. धवलादिकान्; B. धवलादिक । 14. P. यद् गीयते ।

तद्रूपकाणामभिधानपूर्वं
छन्दोविदो मङ्गलमामनन्ति[1] ॥ ३९ ॥[2]

चत्रयं[3] दो यदा पादे तदा डुम्बडकं[4] मतम् ।
घत्ता[5] ध्रुवकसंज्ञेयं ध्रुवा[6] त्रेधा मता सताम् ॥ ४० ॥

षट्पदी चतुःपदी[7] च द्विपदी चेति[२८ B]नामभिः ।
सप्तादिसप्तदशान्तकलाः[8] पादास्तु पूर्वयोः ॥ ४१ ॥

तत्र सप्त कलाः[9] पादे[10] च [11]तौ चाथ पदौ गणौ[11] ।
अष्ट पत्वे[12] पतौ षदौ नवकले[13] षतौ पचौ ॥ ४२ ॥

चषौ च[14] दोऽथवा पौ च चरणे तु दशाक्षरे ।
चपदाः पचदा वापि* रुद्रार्णे चरणे गणाः ॥ ४३ ॥

चपताः षचताश्चेति[15] पदे द्वादशवर्णके ।
त्रयोदशाक्षरे पादे पौ तश्च चपषा*[16] स्मृताः ॥ ४४ ॥

चत्रयं दौ तु[17] षश्चौ च चरणे तु चतुर्दशे ।
चत्रयं तोऽथवा पानां* त्रयं पञ्चदशांह्रिके ॥ ४५ ॥

षद्वयं[18] चः षोडशांह्रौ दचतुष्कं[19] तु चद्विकम् ।
पादे सप्तदशकले षश्चौ* [20]तश्चत्रयं तु पः[20] ॥ ४६ ॥

---

प्रतिस्थित पाठ— ४३. *पञ्चदा वापि । ४४. *चकपाः । ४५. *दोषचश्चाथ ।
४६. *श्चो तश्च ।

---

1. K. ०माचरन्ति । 2. आचार्य हेमचन्द्रकृत छन्दोऽनुशासन की स्वोपज्ञ टीका में यह पद्य यथावत् मिलता है । 3. B. चत्रय । 4. P. कम्बडकम् । K. कम्बलकम् । छन्दोऽनुशासन में हेमचन्द्र ने इस लक्षण के छन्द का नाम 'झम्बटकम्' लिखा है । यथा—

'गाने चिदौ झम्बटकम्' ।

यस्य कस्यचिद्गाने चगणत्रयं द्विमात्रश्च पादे चेत्तदा झम्बटकम् ॥"

5. P. यत्ता(त्ता) । 6. B. ध्रुवो । 7. P, चतुष्पदी । A. चतुःपदी । 8. B. ०कालाः । 9. P. सप्तकले । 10. P. में नहीं है । 11-11. P. चतौ पदौ गणौ मतौ । 12. P. अष्टाक्षरे । 13. P. नवाक्षरे । 14. P. चद्वयं । छन्दोऽनुशासन में लक्षण इस प्रकार है—'अंश्चादौ षचौ पौ वा ।' 15. P. षचता वेति । 16. P. तपकाः । 17. P. दास्तु । 18. P. चद्वयं । 19. P. दचतुष्कं ।; B. में 'चतुष्कं' के पहले 'द' नहीं है । 20-20. P. तश्चत्रयं तु पः; । A. तः च; B. त च ।

[एवं]* गणै[1] स्त्रिभिस्तुल्यैस्तुल्यातुल्यैरतुल्यकैः ।
[2]पादा यत्र भवन्त्यर्द्धे[2] षट्पदी सा प्रकीर्तिता ॥ ४७ ॥

अस्यामाद्यस्य पादस्य द्वितीयस्य[3] तथा पुनः ।
तृतीयस्य तु षष्ठेन तुर्यस्य पञ्चमेन तु* ॥ ४८ ॥

अनुप्रासस्तु कर्त्तव्यः प्रायेण द्विचतुर्थयोः ।
चतुष्पदी विशेषास्तु वस्तुकार्द्ध[4] समादयः ॥ ४९ ॥[5]

[6]अनुप्रासस्तु कर्त्तव्यश्चतुष्पद्यामथोच्यते ।[6]
प्रथमस्य द्वितीयेन तृतीयस्येतरेण तु ॥ ५० ॥ [२९A]

ओजे[7] कलास्तु सप्ताद्याः षोडशान्ताः समे पुनः ।
प्रत्येकं सैकिकाः सप्तदशान्ताः परिकीर्तिताः ।
व्यामिश्राद्ध[8]समा सर्वसमा*संकीर्ण[8]काश्च ताः ॥ ५१ ॥

चम्पक*-कुसुम-सामुद्रक-मल्हणक-सुभगविलास-केसर[9]रावणहस्तक-सिंह-विजृम्भित*-मकरंदिका-मधुकरविलसित-चम्पक[10]कुसुमावर्ताः ।

मणिरत्नप्रभा-कुङ्कुमतिलक*-चम्पकशेखर[11]-क्रीडनक[12]*बकुलामोद-मन्मथतिलक-मालाविलसित*-पुण्यामलक-नवकुसुमितपल्लवाः ॥ ५२ ॥

मलयमारुत-मदनावास-माङ्गलिकाभिसारिका-कुसुमनिरन्तर-मदनोदक-चन्द्रोद्योत-रत्नावल्यः ॥ ५३ ॥

भ्रूवक्रणक[13]-मुक्ताफलमाला-कोकिलावली-मधुकरवृन्द-केतकीकुसुम-नवविद्युन्माला-त्रिवलीतरङ्गकाणि ॥ ५४ ॥

---

प्रतिस्थित पाठ— ४७. *दो वर्णों का स्थान रिक्त । ४८. *तुः । *यहाँ ५० का अंक दिया है, अगला पद्यांक भी ५० ही है । ५१. *समासर्वममा । ५२. *पञ्चम । *विजं‌तं० । *तिलकं । *क्रीडन । *विलसित ।

---

1. P. एवं गुणैः । B. एवं ग गुणैः । 2-2. P. पादत्रयं भवत्यर्धे । A. B. पादत्रय भवन्त्यर्द्धे । 3. P. द्वितीयेन । 4. P. वस्तुकार्थं । 5. P. में ४९ वें और ५० वें पद्य में विपर्यय है । 6-6 B. अनुप्रासस्तु कर्त्तव्यो धीमता द्विचतुर्थयोः । इसके आगे ५० वें पद्य की दूसरी पंक्ति है । ४९ वें की दूसरी पंक्ति छूट गई है । 7. P. ओं(?)जे । B. ओं ओं जे । 8-8 P. समासर्दंसमा(ऽ)संकीर्णं०; A. B. समासर्वसर्व० । 9. B. केशर । 10. P. पञ्चक । K. चंपक । 11. A. पंचकशेषर; B. चंपकशेषर । 12. P. क्रीडन । 13. हेमचन्द्र ने इसका नाम 'भ्रूचक्रणक' दिया है ।

अरविन्दक-विभ्रमविलसितवदन-नवपुष्पंधय-किन्नरमिथुनविलास-विद्याधर-विलसितलीला-सारङ्गाः ॥ ५५ ॥

कामिनीहासापदोहक-प्रेमविलास-काञ्चनमाला-जलधरविलसिताः ॥ ५६ ॥

अभिनव-मृगाङ्कलेखा-सहकारकुसुम[२९B]मञ्जरी-कामिनीजीवनक[1]-कामिनी-कङ्कण-हस्तकाः ॥ ५७ ॥

सुखपाल-तिलक-वसन्तलेखा-मधुरालापनिकाश्च[2] ॥ ५८ ॥

मुखपंक्ति-कुसुमलतागृहे [3]रत्नमाला चेति पञ्चपञ्चाशद्भेदाः[3] ॥ ५९ ॥

व्यत्यासे* सुमनोरमा-पङ्कज-कुञ्जर-मदनातुर-भ्रमरा[वलि]मुखपङ्कजश्री-किङ्किणी-कुङ्कुमलता-शशिशेखरलीलालयाः ॥ ६० ॥

चन्द्रहासमधुर-वचना[4]-कुसुममाल[5]-मालतीकुसुम-नागकेसर-नवचम्पक-माला[6]-विद्याधरकुब्जक-कुसुमकुसुमास्तरणाः ॥ ६१ ॥

मधुकरीसंलाप-मुखवास-कुङ्कुमलेखा-कुवलयदाम-कलहंस-सन्ध्यावली*-कुञ्जरललिता-कुसुमवल्ल्यः ॥ ६२ ॥

विद्युल्लता-पञ्चाननलालिता*- मरकतमाला - अभिनववसन्तश्री-मनोहरा-क्षिप्तिका*-किन्नरलीलाः ॥ ६३ ॥

मकरध्वजहास-कुसुमाकुलमधुकर-भ्रमरविलास*-मदनविलास-विद्याधरहास-कुसुमायुधशेखराः ॥ ६४ ॥

उपदोहक-दोहक-चन्द्रलेखिका-सुतालिङ्गन-कङ्केल्लिलता-भवनानि ॥ ६५ ॥

कुसुमित केतकीहस्त-कुञ्जरविलसित-राजहंसाशोक[३०A]पल्लवच्छायाः ॥ ६६ ॥

अनङ्गलता-मन्मथविलसित-हुल्लणकानि*। कज्जललेखा-किलकिञ्चिते* शशिबिम्बितं चेति ता बद्धाः* ॥ ६७ ॥

---

प्रतिस्थित पाठ— ६०. *वासन्त्य। ६२. *संघावली। ६३. *पंचाननलालसा। *०क्षिप्तका। ६४. *समरविलास। ६७. *झल्लणकानि। *किलिकिञ्चते। *बद्धा।

---

1. P. क्रीडनक०। 2. P. मधुरालापिनीहस्ताः। 3-3. P. रत्नमाला च। इति पञ्चपञ्चाशद्भेदाः॥ 4. P. गोरोचना०। 5. P. कुसुमबाण। 6. P. नवपञ्चकमाला।

शुद्धा द्विपदिका पादे[1] षश्चा* पञ्च च गान्तका:* ।
जौ स्त:[2] षष्ठद्वितीयौ तु मात्रा-द्विपदिका तत: ॥ ६८ ॥

षष्ठेनैकेन गुरुणा पूर्णा शुद्धैव गाधिका[3] ।
षश्च द्वयं मानवी स्यात्[4] पौ तौ* लौ चन्द्रिका मता ।
षश्चत्रयं धृतिस्तारान्तगा षष्पचतुष्टयम्*[5] ॥ ६९ ॥

इति द्विपदी ॥

आनन्त्यान्न प्रतन्यन्ते[6] द्विपद्यादेर्भिदा मया ।
प्रबन्धविधिहेतुत्वात् काश्चिदत्रोपवर्णिता:[7] ॥ ७० ॥

कलहंसो नभौ जयौ ॥ ७१ ॥

षो*गणद्विपदी नाम चतौ सा स्वरपूर्विका ।
उपगन्धर्वकं नाम षत्रयं चचतुष्टयम् ॥ ७२ ॥

दश्चार्कैर्वसुभि: श्रान्तौ[8] तत् संगीतं[9] यतौ पुन: ।
[10]*चतुर्दशभिरष्टाभिश्चच्चरी षश्च[10]* सप्तकम् ॥ ७३ ॥

त्रिमात्रश्च[11] यतिश्चात्र चतुर्दशभिरष्टभि: ।
चतुर्भिश्चगणै: प्रोक्ता पद्धडी, रासक: पुन: ॥ ७४ ॥

मात्राभिरष्टादशभिर्नगणेन यतौ पुन: ।
चतुर्दशभिरेवायं मात्राभि: कथितो बुधै: ॥ ७५ ॥

केषांचिज्जातय: सर्वा रासका: सम्मते मता: ।
चपञ्चकं[12] लघुगुरू यदि[३०B]वा रासको मत: ।
गोपालानां तथा क्रीडा रास इत्यभिधीयते ॥ ७६ ॥

---

प्रतिस्थित पाठ— ६८. *षश्चा: । *कान्तका: । ६९. *तो । *षश्च चतुष्टयम् । ७२. *वो ।
७३. *-* चतुर्दशभिश्चच्चरी षश्च षश्च ।

---

1. P. शुद्धद्विपदिकापादे । 2. P. जो(जौ)स्त: । 3. P. गान्धिका: । 4. P. स्या(त्) । 5. B. पुष्पचतुष्टयम् । 6. B. तन्यन्ते । 7. P. काश्चिदेव हि वर्णिता: । A.B. काश्चिदशेषवर्णिता: । 8. K. श्रान्ते: । P. में 'लान्ते' अथवा 'गान्ते' पाठ अधिक सार्थक बताया गया है । 9. B. तत्संगीतयंतौ । 10-10. P. चतुर्दशभिरष्टाभिश्च चरोष(?)श्च । 11. P. त्रिमात्रस्य । 12. B. च चंपकं ।

विश्वे मानवस्तिथयो[1] गुणचन्द्रौ शरविधू[2] शिखीन्दू च।
तिथयो विश्वे विषमे समे तु रव्यंक*[3]विश्वमनुरवयः ।। ७७ ।।

गुणचन्द्रौ युगचन्द्रौ षोडशसंख्याकलाः क्रमशः।
सारसभ्रमरौ[4] हंसः कुररश्चन्द्रलेखिकाश्चैव[5]।
कुञ्जरतिलकौ हंसक्रीडो ह्येतेषु निर्दिष्टाः ।। ७८ ।।

लघुभिः पञ्चादिभिरिह यद्येषामर्द्धयोः[6] शिखान्ते स्यात्।
तं सूरयो मयूरं नाम शिखाद्विपथकं प्राहुः ।। ७९ ।।

रतिषष्ठदशमैः[7] कामगणैस्त्रिपदी मता।
एकादशभिराद्यैश्च[8] पादौ[9] द्वि-द्वि-गणौ[10] मतौ ।। ८० ।।

चतुर्गुणद्वितीयस्तु[11] चतुर्थस्त्रिगणस्तथा।[12]
तस्यामोजे[13] पञ्चदश कलाः षोडश ताः* समे ।। ८१ ।।

अर्द्धयोर्भिन्नयमकौ कीर्त्तिता सा चतुष्पदी।
बाणान्ते* चरणौ त्रि-त्रिगणौ यस्यास्त्रिषष्ठकौ ।। ८२ ।।

चत्वारो द्वि-द्विगणा सा गणैः कामस्य षट्पदी।
तृतीये पञ्चमे चाद्ये मात्राः पञ्चदशैव तु ।। ८३ ।।

तुर्ये द्वितीये रवयस्तद्वस्तु परिकीर्तितम्।
प्रबन्धस्योपयोगीनि छन्दांस्युक्तानि कानिचित् ।। ८४ ।।

छन्दःशास्त्रानुसारेणोहनीयानि पराण्यपि।
यस्यार्या धर्म[३१A]कार्यार्थं [14]चरितं पर्युपासते।
तेनार्याकिङ्करेणेदं कृतमार्यापरीक्षणम्[15] ।। ८५ ।।

[16]इति श्रीराजाधिराजश्रीकुम्भकर्णविरचिते तत्त्वप्रदीपे पाठ्यरत्नकोशे छन्द उल्लासे आर्यविलोकनं नाम तृतीयं परीक्षणम् ।।[16]

---

प्रतिस्थित पाठ— ७७. *रव्यर्कं। ८१. * षोडशशताः। ८२. *बाणान्तौ।

---

1. P. नवतिथयो। 2. P. शरविधौ। 3. P. रत्यर्कं। 4. B. सारसभ्रमरो। 5. P. ०लेखकश्चैव। 6. A. में 'म' और 'यो' के बीच का अक्षर अस्पष्ट है। P. यद्येष-मद्ध(?)योः। 7. P. रतिरष्टदशमैः। 8. P. एकादशभिराद्यौ तु। 9. P. मादौ। 10. P. द्वि-द्विगुणौ। 11. P. चतुर्गुणस्तृतीयस्तु। 12. P. ०त्रिग(गु)णस्तदा। 13. P. यस्यामोजे; B. यास्यामोजे। 14. P. कामार्थं। 15. P. कृतमार्याविलोकनं। 16-16. P. इति श्रीराजाधिराजकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे पाठ्यरत्नकोशे छन्द उल्लासे आर्यावलोकनं नाम तृतीयं परीक्षणम्। B. में 'समाप्तम्' और है।

# प्रस्तारपरिपाटी नाम चतुर्थ परीक्षण

येन प्रस्तारमाधातुं भूतानां भूतयोनिना ।
प्रसृतं परमाण्वादि नमस्तस्मै परात्मने ॥ १ ॥

समवृत्तस्य [तु] पादेऽर्द्धसमस्यार्द्धेऽखिले[1]तु विषमस्य ।
ये वर्णास्यु[र्]गुरवः प्रथमविकल्पे तु ते स्थाप्याः ॥ २ ॥

प्राग्रूपस्याद्याद्गोऽधो ल[:]स्यादुपरि समं तु परम् ।
प्रस्तारे पूर्वविधिरसमयभेदकृदिह[2] भवेत् प्राक्[3] ॥ ३ ॥

भूयः कुर्याद्विधिममुं यावत् सर्वलघुर्भवेत् ।
मात्रागणे तु प्राग्रूपमात्राः पूर्वं[4] नयेत् सुधीः ॥ ४ ॥

चरणस्य व्यवस्थोक्ता नार्यादिषु पुरातनैः ।
नष्टाङ्के विषमे सैके गुरुः स्यादर्थिते पुनः ॥ ५ ॥

समे चार्द्धे त[द]र्द्धे च नष्टाङ्के लघवो मताः ।
*प्रारभ्याद्याद्द्विगुणितानेकतोङ्कान्[5] समालिखेत् ॥ ६ ॥

सैकैर्युक्तैर्लघुस्थांकैरुद्दिष्टस्य मतिर्भवेत्[6] ।
उद्दिष्टाङ्कसमाहारात् [सैकात्]* संख्यापि लभ्यते ॥ ७ ॥

येन वर्णादिवृत्तानां विन्यासः प्रसृतो भुवि ।
तेन श्रीकुम्भकर्णेन[7] प्रस्तारोऽयं प्रपञ्चितः ॥ ८ ॥ [३१B]

[8]इति श्रीराजाधिराजमहीमहेन्द्रश्रीकुम्भकर्णविरचिते छन्द उल्लासे प्रस्तारपरिपाटी नाम चतुर्थं परीक्षणम् ॥ छ ॥

छन्द उल्लासश्च तृतीयः समाप्तः ॥[8]

---

प्रतिस्थित पाठ— ६. *प्रारम्याद्याद्विगुणितातानैकतोंकात् समालिखेत् । ७. *स्थान रिक्त है ।

---

1. B. पादेर्धर्मसस्यार्द्धेऽखिले । 2. P. पूर्वविधिस्समय० । 3. P. प्राज्ञः । 4. P. प्राग्रूपमात्रापूर्त्तिम् । 5. B. ०नेकतोंकान् । 6. P. मितिर्भवेत् । यहाँ छन्दोभंग है । 7. P. श्रीकालसेनेन । 8-8. P. इति श्रीजगदीशवनदेवनिजगणेन जगदीश्वरीकामाक्षा[1]-चरणकिङ्करेण श्रीब्रह्माद्रिविभुना अध्युष्टसमनरेश्वरेण भोम्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहण-

---

१. K. कामाक्षी ।

संवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्तिपुरपराजिताचलनायकेन संगमनीरदुर्गोद्धरणो[१]-द्धृतसकलमण्डलाधीश्वरेण दमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण अष्टादश-गिरिशिखरपरिवारिताञ्जनगिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनधर्षित-महोरगपुरेण श्रीवनदेवस्वामिप्रसादरचनापरपरमेश्वरेण त्र्यम्बकेश्वरसन्निधिकीर्तिस्तम्भोन्नत-जयस्तम्भेन श्रीब्रह्मगिरिभीमस्वर्गयथार्थीकरणरचितचारुपथेन श्रीकामेश्वरीगिरिनवीननिर्मिति-पराजितसुमेरुणा श्रीमहिषाचलोपरि श्रीहरिचरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणा-वादनप्रवीणेन यवनकुलाकाल[२]–कालरात्रिरूपेण त्रिसन्ध्याक्षेत्र[३]समुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराज[४]महाराणाश्रीमृगाङ्कृतामराजनन्दनेन महाराज्ञीसौभाग्य-वतीजसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणिकुम्भराजन्यावतंसमहाराज्ञी श्रीकर्मवतीलघु(घु)मावतीहृदयाधिनाथेन[५] श्रीराजाधिराजश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसाया पाठ्यरत्नकोशे छन्द उल्लासे प्रस्तारपरिपाटी नाम चतुर्थं परीक्षणम् ।

॥ छन्द उल्लासस्तृतीयः समाप्तः ॥

---

१. K. ०दुर्गोद्धृत० । २. A. में 'काल' नहीं है । ३. A. संध्य····। ४. K. में 'महाराजाधिराज' नहीं है । ५. B. में 'नाथेन' के बाद 'इति' और है ।

## ४. अलङ्कारोल्लास--उद्देश नाम प्रथम परीक्षण

क्रियते स्वस्वसिद्धान्तैस्तीर्थिकैर्यस्य* लक्षणम् ।
वृषादिलक्षणं नौमि [1]सि[द्धिम]त्सद्धिलक्षणम्[1] ॥ १ ॥

प्रमदा इव नो भान्ति प्रबन्धाः सुष्ठ्वलंकृताः ।
विलक्षणा अतो लक्ष्म[2] ब्रुवेऽलंकृतिभिरिह*[3] ॥ २ ॥

विभूषणं तथा शोभाभिमानोऽक्षरसंगतिः ।
प्रोत्साहाद्युदाहरणे[4] निरुक्तं गुणकीर्तनम् ॥ ३ ॥

गुणानुवादोऽतिशयो हेतुः सारूप्यसिद्धयः[5] ।
पदोच्च*[याक्रन्द]मिथ्याव्यवसायप्रियाशिषः[6] ॥ ४ ॥

प्राप्तिश्च पश्चात्तापनं संशयोऽर्थानुवर्त्तनम्[7] ।
कार्यनिर्भासनाख्यान[8]-याञ्चायुक्त्यनुनीतयः[9] ॥ ५ ॥

दृष्टान्तप्रतिषेधौ[10] च क्षमा पृच्छा[11] ततः परम् ।
मनोरथोपपत्ती च कपटं परिदेवनम्* ॥ ६ ॥

षट्त्रिंश[12]देतान्युक्तानि लक्षणानि समासतः ।
उपमाद्यैरलङ्कारैः सम्मितानि च ते यथा ॥ ७ ॥

उपमा दीपकञ्चैव रूपकं यमकं तथा ।
चत्वारोऽमी समादिष्टा अलङ्काराः पुरातनैः ॥ ८ ॥

लक्षणा[13] ल[३२A]क्षणैरेभिर्नानावृत्तैर्विचित्रिताः ।
बुधैः प्रबन्धाः कर्तव्या नानालंकृत्यलंकृताः ॥ ९ ॥

---

प्रतिस्थित पाठ— १. *तीर्थकैर्यस्य । २. *ब्रु वेऽलंकृतिभि रह । ४. *यदोच्च । ६. *परिवेदनम् ।

---

1-1. P. तमसत्सिद्धिलक्षणम् । 2. P. अतस्तानि(?) । 3-3. P.ब्रू (ब्रु)वेऽलंकृतिभिः सह । 4. P. प्रोत्साहनेदाहरणे । 5. P. हेतुसारूप्य० । 6. P. मिथ्याध्यवसायप्रियाशिषः । A. प्रियाशिशः(?) B. प्रियाशिखः । 7. P. संशयोत्थानुवर्तनं । 8. K. निर्भर्त्संनाख्यान० । 9. B. युक्तानुनीतयः । 10. P. ०प्रतिषिद्धौ (षेधौ) । 11. P. श्रद्धा । 12. B. षड्विंशत्रिंश·· । 13. P. लक्षिता ।

ग्रल्पमुद्दिश्यते येन दीयते बह्वहर्निशम् ।
तेन भूषितविज्ञेन राज्ञोद्दिष्टं विभूषणम् ॥ १० ॥

[1]इति श्रीराजाधिराजश्रीकुम्भकर्णविरचिते संगीतराजे पाठ्यरत्नकोशेऽलङ्कारोल्लासे उद्देशपरीक्षणं प्रथमं समाप्तम् ॥



1-1. P. इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे पाठ्यरत्नकोशे ग्रलंकारोल्लासे उद्देशपरीक्षणं प्रथमं (समाप्तम्) ॥

# लक्षण नाम द्वितीय परीक्षण

महाभूतादिकानर्थान् योऽञ्जसा[1] सृजतीश्वरः ।
अलंकृतिनिमित्तं तं पदार्थानां नमाम्यहम् ॥ १ ॥

यथारसं येन[2] निरूपितेषु भवन्त्युपादेयगुणाः प्रबन्धाः ।
[3]तदर्थशोभाजननार्थमेषां प्रचक्ष्महे भूषणलक्षणानि ॥ २ ॥

अलङ्कारैर्गुणैश्चैव भूषणैरिव यद्युतम् ।
रूपकं रसवद्भाति तद्भूषणमितीरितम् ॥ ३ ॥

यथा—

उच्चस्फाटिकहर्म्यभित्तिविलसत्[4]सत्पद्मरागांशुभिः
सिन्दूरप्रकरैरिवातिविततैर्नित्ये[5] वसन्तोत्सवे ।
चञ्चद्हेमघटावतंसविलसन्नाना[6]निलिम्पालयै-
रिन्द्रस्येति पुरी* विभाति सततं श्रीचित्रकूटालयः[7] ॥ ४ ॥

इति विभूषणम् ॥ १ ॥

[8]पूर्वसिद्धार्थवाक्येनाप्रसिद्धार्थ[स्य]साधनम्[8] ।
यत्र श्लक्ष्णविचित्रार्था तां शोभां जगदुर्बुधाः ॥ ५ ॥ [३२B]

यथा—

श्रीकुम्भेन[9] किरीटिनेव* शतशो दन्दह्यमाने कुले
शाके कौरववत्सुयोधन इव त्वय्येकशेषं गते ।
त्वं रे मालवभूमिनाथ कुरुषे नो चेन्मदीयं वच-
स्तन्मन्ये विधिनात्तुमीप्सित[10] इदं मंत्र्यं च शाठ्य* रणे[11] ॥ ६ ॥

इति शोभा ॥ २ ॥

---

प्रतिस्थित पाठ — ४. *पुरा। ६. *किरीटेनेव। *मंत्र्यंन् वशाद्य।

---

1. A. B. योजसा। 2. P. येषु। 3-3. P. तदत्र०। 4. P. विसरत्०। B. विसर-सत्पद्म····। 5. P. नित्यं। B. विततेर्नित्ये। 6. B. में केवल इ की मात्रा (ि) है और 'लंपालयै' नहीं है। 7. श्रीब्रह्मशैलालयः। 8-8. P. पूर्वसिद्धार्थवाक्येन प्रसिद्धार्थस्य साधनम्। 9. P. श्रीकृष्णेन। 10. B. विधिना तमीप्सित। K. विधिना त्वमीप्सित। 11. B. में 'शाठ्य' से पहले 'च' नहीं है।

सहेतुकैर्यो* वचनैः प्रतिषिद्धोऽप्यनेकशः[1] ।
न निवर्त्तेत यत्रासावभिमान इति स्मृतः ॥ ७ ॥

यथा—

येनानर्गलदुर्गवर्गजयिना[2] नाजीगणन्* वैरिणो
दुर्गाग्रचो [3]जयते क एष समरे भूपेन शौर्याब्धिना[3] ।
[ध्वस्ते भीतमभूद]लं* शककुलं सारङ्गपूर्वे[4] पुरे
*[त्वं शेषोऽसि विमुञ्च गर्वमधुना स्वं जीवितं[5] पालय]* ॥ ८ ॥

इत्यभिमानः ॥ ३ ॥

[6]संश्लेषो यत्र वर्णानां वर्णवैचित्र्यतामगात् ।[6]
[7]तामित्यक्षरविन्यासां विदुरक्षरसंगतिम्[7] ॥ ९ ॥

यथा—

या [सुलभा न सुरेशान्*] सुरतरुतः परिजनेन तामस्मै ।
वितरति[8] [9]कुम्भ*महीपतिरभिमतततिरभिमुखीभूतः ॥ १० ॥

इत्यक्षरसंगतिः ॥ ४ ॥

[10]यत्रास्पष्टगुणोपेतैः[10] सोपमानैर्वचोभरैः ।
गूढार्थैर्नायकोत्साहयोगः प्रोत्साहनं तु तत् ॥ ११ ॥ [३३A]

[यथा—]

उद्दण्ड[:]पटहध्वनिर्घनघनप्रध्वाननाभैरवो[11]
हेषा[12]तुङ्गतुरङ्गमाग्र्यखुरलीशब्दानुगा श्रूयते ।
दिग्दन्तावलदन्तभेदनपटुर्वीरालिसिंहध्वनि-
र्निन्ये[13] शैलशिलोच्चयान् पुनरहो कस्मादकस्मादिव ॥ १२ ॥

इति प्रोत्साहनम् ॥ ५ ॥

---

प्रतिस्थित पाठ— ७. *सहेतुकैयो । ८. *नाजीगणो । *'लं' के स्थान पर 'सं' है । *यह पंक्ति नहीं है, स्थान रिक्त है । ९. *विदुरक्षयसंगतिम् । १०. *'यस्य' के बाद स्थान रिक्त है । *'भ' अक्षर छूट गया है ।

---

1. B. प्रतिपद्धोप्यनेकशः । 2. P. ये नानर्गलदुगवर्गजयिना(नो) । 3-3. P. हि कुरङ्ग एष समरे भूपेन शौर्याहृतः । B. एवस्समरे । 4. P. श्रीशुक्लपूर्वे । 5. A. स्वजीवितं । 6-6. P. संश्लेषोऽर्याक्षरगतो यत्र वैचित्र्यभाग्भवेत् । 7-7. P. तामत्यक्षर··· संगतिम् । B. ०सगतिः । 8. A. B. विरति । 9-9. P. कालुजिभूपतिरभिमततति मभिमुखीभूतः । 10-10. K. यत्रास्त्यष्टगुणोपेतैः । 11. B. ०भैरव । 12. P. हेषा । 13. P. भिन्दिन् ।

श्रवणादेव[1] शब्दस्य यत्र कार्यान्तराण्यपि ।
प्रयुक्तान्यपि[2] सिद्ध्यन्ति तदुदाहरणं स्मृतम् ॥ १३ ॥

[यथा—]

लेखिन्या[3] नलकूवरं* पृथुकुचप्रारम्भगुर्व्या तथा[4]
वैदर्भी[5] निषधाधिपेन च रतिं कामेन कृष्णं श्रिया ।
पश्यन्त्यो मुहुरन्वहं नृपसुताः श्रीकुम्भकर्णक्षमा[6]—
नाथेन स्वमतुल्यरागविभवाः सादृश्यतोऽकल्पयन् ॥ १४ ॥

इत्युदाहरणम् ॥ ६ ॥

तथ्यातथ्यविभेदेन निरुक्तं* द्विविधं स्मृतम् ।
सिद्धिप्रसाधितं पूर्वमपरं चाप्रसाधितम् ॥ १५ ॥

तथ्यं यथा—

चन्द्रः काश्मल्यमागात् कथमिति गदिते कश्चिदस्याशयज्ञो-
ऽवादीदस्योदयोऽयं त्रिभुवनधवलीकारकामस्य जाने ।
तच्छ्रीकुम्भस्य[7] राज्ञः कृतामति[8] विधुभिः कीर्तिपूरैः कृतं मे
तथ्यारम्भेण[9] हृत्स्थो बहिरिति समभू[३३B]त्कालिमातथ्यमस्य*॥१६॥

अतथ्यं* यथा—

सत्यं नासत्यमेतन् मुनिवचनमहाभ्यास*योगोऽवहद्यत्[10]
कौशल्यं कर्मणां नो यदि कथमभजत् सोऽपि राजा द्विजानाम् ।
दृष्ट्वा[11] श्रीकुम्भकर्णक्षितिपतियशसां राशिमुद्रिक्तक्षोभं
हित्वा स्वल्पौचितीं[12] तां निशिचरणचणत्वोचितं[13] कालिमानम्*॥१७ ।

इति निरुक्तम् ॥ ७ ॥]

---

प्रतिस्थित पाठ— १४. * नन कूवरं । १५. *नि निरुक्तं । १६. *०सस्य । १७. *अथ तथ्यं । *०महोभ्यासयोगो । *कालिमानाम् ।

---

1. P. श्रवणादेक । 2. P. अनुक्तान्यपि । 3. P. लेखित्वा । 4-4. P. पृथुकुचप्रारम्भया रम्भया । 5. P. वैदर्भी(र्भीं) 6. P. श्रीकालसेनक्षमा– । 7. P. तच्छ्रीकृष्णस्य । 8. P. कृतमति । 9. B. तथ्यापूरेण । 10. P. वहेद्यत् । 11. P. श्रीकालसेनक्षितिपति० । 12. P. स्वस्यौचिति । B. स्वस्यौचिति । 13. K. निशिचरचरण० ।

बहूनां गुणिनां यत्र नानार्थजनितैर्गुणैः ।
एकोऽपदिश्यते तत्तु कीर्त्तितं गुणकीर्त्तनम् ॥ १८ ॥

यथा--

ये दृप्तप्रतियोधशौर्यशमनप्रख्यातवीरव्रताः
प्रद्युम्नप्रतिरूपका वितरणप्रावीण्य[1]कल्पद्रुमाः ।
[2]ते सारङ्गपुरे हठेन[2] यवना नीताः[3] क्षयं भूभुजा
धृष्टो यातु [4]महम्मदो घुरमिमां[4] कालंदरीं[5] मन्दधीः ॥ १९ ॥

इति गुणकीर्त्तनम् [॥ ८ ॥]

उत्तमानां गुणैः स्पर्द्धा हीनानामुपमाकृते ।
गुणानुवादः स प्रोक्तः प्रबन्धे कुम्भभूभुजा[6] ॥ २० ॥

[यथा--]

ऋते हिमाद्रिं सरितः सुराणां
न संभवः स्यादिति युक्तमेतत् ।
इत्यूहि रे[7] शुभ्रितसर्वलोकां
विलोक्य कीर्तिं नृ[३४A]पतेरमुष्य ॥ २१ ॥

इति गुणानुवादः ॥ ९ ॥

सामान्यस्य जनस्यात्र बहूनां गुणकीर्त्तनैः ।
उत्तमार्थविशेषो यः स प्रोक्तोऽतिशयो बुधैः ॥ २२ ॥

यथा--

पूर्णेन्दुमेतन्मुखमब्जयोनि--
र्निर्माय[8] पश्चात् समवाप दौस्थ्यम् ।
तद्दर्शनात् संकुचदासनाब्ज--
मिलद्दलोत्पेषणखिन्नगात्रः ॥ २३ ॥

इत्यतिशयः [॥ १० ॥]

बहूनां भाषमाणानां अनेकार्थविनिर्णयात् ।
सिद्धौ[9] समानवचने हेतुरत्रोपवर्णितः ॥ २४ ॥

---

1. A. प्राविण्य । 2-2. P. तेऽमी दल्लिपुरे० । A. नेपाऽल्लिपुहटेन । B. नेपादुदु-लिपुहटेन । 3. P. यवनानीताः । 4-4. A. B. महम्मदोद्धुरमिमां । 5. B. कालंदरी । 6. P. कृष्णभूभुजा । 7. इत्यूह्यते । 8. P. योनिं(योनि)र्निर्माय । 9. P. सिद्धौ(द्धे) ।

यथा—

घिङ्मां[1] शकाधममहं प्रथमोऽभवं यद्-
वैधव्यहेतुरतुलं यवनीकुलानाम् ।
क्षत्रोद्भवे शककुले निधने[2] निदानं
येनाभियुक्त[3] इति मालवनाथ[4] ऊचे ॥ २५ ॥

इति हेतुः [॥ ११ ॥]

परोक्षो*ऽपि हि वाच्योऽर्थो यस्माल्लक्षणसाम्यतः ।
उत्पद्यते[5]ऽनुकरणात् [6]सारूप्यं तदिहोदितम्[6] ॥ २६ ॥

यथा—

सम्मोचितो* नागपु[रं][7] किलैकः[8]
स तादृशः शार्ङ्गपुरे*[9]ऽपराधः ।
एतद्विचिन्त्यास्य लभे न[10] शर्मे-
त्यादिष्टवान् गुर्जरपः* स्वभृत्यान् ॥ २७ ॥

इति सारूप्यम् [॥ १२ ॥]

बहूनां तु प्रधानानां तुल्यार्थवचनैरिह ।
एकार्थसाध[३४B]नं वाक्यं सिद्धिर्बुद्धिमतोच्यते ॥ २८ ॥

[यथा—]

यद्बप्पेन[11] पुरार्जितं भगवतः शम्भोः समाराधने
यत् खुम्माणमुखैश्चितं[12] नृपतिभिर्धर्मैकनिष्ठैश्चितम्[13] ।
शर्वाणी[14]चरणानुचिन्तनबलात् स्फीतीकृतं यत् पुन-
स्तत् पुण्यं नृपकुम्भकर्णवपुषा[15] स्फारं समुज्जृम्भते ॥ २९ ॥

इति सिद्धिः [॥ १३ ॥]

प्रशंसा क्रियते यत्र नानार्थं प्रथनात्मिका ।
पदैर्बहुगुणैरेकवाचकैः स पदोच्चयः ॥ ३० ॥

---

प्रतिस्थित पाठ— २६. *परोक्षापि । २७. *शार्ङ्गपरे । *गूर्जरयः ।

---

1. B. धिक मां । A. धिक् मां । 2. P. निधनो(?) । 3. B. यैनाभियुक्त । 4. P. गुर्जरनाथ । 5. B. उत्पत्यते । 6-6. P. तत्सारूप्यमिहोदितम् । 7. P. मातृपुरं । 8. P. कुलंकः । K. किलंकः । 9. P. स्थानपुरे । 10. P. लभेत । 11. P. श्रीतामेन । 12. P. यच्छ्रीराममुखैश्चितं । 13. P. धर्मैकनिष्ठैः सदा । B. धर्मैक० । 14. P. कामाक्षी० । A. B. कामाक्षां । 15. P. कालसेनवपुषा ।

यथा—

[1]आसत्यलोकमुर्वीमहिनिलयं व्याप्य संस्थिता नित्यम् ।
आभाति विश्वमूर्तेर्वनमालेवास्य सत्कीर्तिः[2] ॥ ३१ ॥

इति पदोच्चयः [॥ १४ ॥]

तीव्रार्थभाषणं[3] यत्स्यात्[4] परसादृश्ययुक्तिभिः[5] ।
वस्तुस्वरूपोपन्यासे स आक्रन्दः स्मृतो बुधैः ॥ ३२ ॥

यथा—

इत्यूह्यते संयति योऽरिवर्ग-
रजातघातेषु[6] शकेष्वकस्मात् ।
नवावतारं व्यसनस्य कुर्वन्
कोऽप्येष[7]कुम्भच्छलकैटभारिः[8] ॥ ३३ ॥

इत्याक्रन्दः ॥ १५ ॥

अतस्मिन्नपि[9] यत्रार्थे तुल्यसार्थस्य[10] निर्णयः ।
स मिथ्याध्यवसायोऽस्ति*[11] प्रबन्धादिषु लक्षणम् ॥ ३४ ॥

यथा—

एत[३५A]न्मे शिशुभाषितं न च रुतं नो कुञ्जभूमिर्गृहं
नो भृङ्गावलिगुञ्जितं मयि रुषा ना*[थस्य मे] हुङ्*कृतम् ।
नो वल्लयश्चलपाणयः* मखिगणा इत्थं हते मालवे[12]
[13]यद् भीतेर्वचनानि[—]* मनुम्लेच्छाङ्गनाः सर्वशः[13] ॥ ३५ ॥

इति मिथ्याध्यवसायः ॥ १६ ॥

यत्पूर्वं क्रोधजननमन्ते[14] हर्षप्रवर्धनम् ।
प्रियोक्तिर्गदिता सा ज्ञैराशीर्वादसमन्विता[14] [॥ ३६ ॥]

---

प्रतिस्थित पाठ— ३१. आः सत्य० । ३४. *मिथ्याध्यवसायस्ते । ३५. *तीन वर्णों का स्थान रिक्त, बाद में 'हु' अक्षर है । *०पाणया । *स्थान रिक्त है । ३६. *यह पद्य प्रति में नहीं है ।

---

1. P. आसप्त० । 2. P. K. कीत्तितति: । A. कीर्तिः । B. कीत्तिता । 3. B. तीव्रर्थ्यभाषणं । 4. P. यस्मात् । 5. A.परशादृश्यं । 6. P. ०रज्ञात० । 7. P. सोऽप्येष । 8. P. कालच्छलकैटभारि । 9. B. एतस्मिन्नपि । 10. P. तुल्यस्यार्थस्य । A. B. तुल्यस्यार्थेऽस्य । 11. P. मिथ्याध्यवसायस्तु । 12. P. गुर्जरे । 13-13. P. यद्गीतेर्वनमाश्रिता भ्रममगुर्म्लेच्छा गताः सर्वशः । B. ०भ्रममगुम्लेच्छा··· । A. भ्रममगुर्म्लेच्छां । 14. A. B. जननं मंते ।

